# पुराणेषु सांख्ययोगदर्शनम्

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
विद्यावारिधिः (पी-एच्०डी०) इत्युपाधये प्रस्तुतः

## शोध-प्रबन्धः

सन् २००७


निर्देशक :

**प्रो० डा० रामजी मालवीय**
प्रतिकुलपतिः
सांख्ययोगतन्त्रागमविभागाध्यक्षः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणस्याम्

अनुसन्धाता

**देवीदयाल शुक्ल**
सांख्ययोगतन्त्रागमविभागे
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणस्याम्



**सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः**
**वाराणसी**

श्रीसंवत् बसन्त पञ्चमी २०६४ ई० सन् २००७

# पुराणेषु सांख्ययोगदर्शनम्

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
विद्यावारिधिः (पी-एच्०डी०) इत्युपाधये प्रस्तुतः

**शोध-प्रबन्धः**

सन् २००७


निर्देशक :

**प्रो० डा० रामजी मालवीय**

प्रतिकुलपतिः
सांख्ययोगतन्त्रागमविभागाध्यक्षः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणस्याम्

अनुसन्धाता

**देवीदयाल शुक्ल**

सांख्ययोगतन्त्रागमविभागे
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणस्याम्



**सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः**
**वाराणसी**

श्रीसंवत् बसन्त पञ्चमी २०६४ ई० सन् २००७

# सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
# वाराणसी

## निर्देशकप्रमाणपत्रम्

**देवीदयाल शुक्लः ''पुराणेषु सांख्ययोगदर्शनम्''** इति विषयमादाय सम्पूर्णानन्द संस्कृत विश्वविद्यालयीयं विद्यावारिधि (पी-एच०डी०) उपाधिमधिकर्तुं महतापरिश्रमेण स्वोपज्ञतया यथाविधि मन्निर्देशने निबन्धः लिखितः।

शोधप्रबन्धस्यास्य पर्यालोचनेन ममायं दृढो विश्वासः यदयं शोधप्रबन्धः परीक्षणार्थतां विभर्तीति संस्तौमि।

निर्देशकः

**(प्रो० डा० रामजी मालवीय)**
प्रतिकुलपतिः
सांख्ययोगतन्त्रागमविभागाध्यक्षः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणसी-२२१००२

# *कृतज्ञता ज्ञापनम्*

सर्वप्रथमं सम्पूर्णानन्द संस्कृत विश्वविद्यालय सकलगुणगण भूषितानां शिष्यवात्सल्यजुषां सांख्ययोगतन्त्रागमविभागे वरिष्ठप्राध्यापकपदमलङ्कुर्वतां पूज्यपादानां गुरुवर्याणां डॉ०राघवेन्द्रजी दूबे महाभागानां पादपद्मयोः सादरं प्रणम्यन्ते येषां निर्देशरूपपाथेयं लब्ध्वा शोधयात्रा मया सम्पन्ना।

सम्पूर्णानन्द संस्कृतविश्वविद्यालयस्य सांख्ययोगतन्त्रागम विभागाध्यक्षाः प्रतिकुलपति महाभागाः सांख्ययोगतन्त्र-पुराण-शास्त्रेषु पारङ्गताः परमगुरुचरणाः प्रो०डॉ०रामजीमालवीय महोदयाः सादरं वन्द्यते येषामनुग्रहं चाहं पाथेयत्वेन लब्ध्वा शोधकार्यं सम्पादितवान्।

मम पितरौ श्री कमलाप्रसाद शुक्ल एवं श्रीमती रामश्री शुक्ला प्रणम्येते स्नेहिलवात्सल्यच्छायायां जन्मन आरभ्याद्यावधि लालनपालनं समवाय प्रारम्भिकाशिक्षापिमया समधिगता।

सांख्ययोगतन्त्रागम विभागस्य अस्थायिप्राध्यापकपद-मलङ्कुर्वतां डॉ०रोहित पाण्डेय महोदयानामुपकारान् सततं स्मरामि। येन प्रबन्धकर्मणि साहाय्यं कृतवन्तः।

गवेषकः

(देवीदयाल शुक्ल)

सांख्ययोगतन्त्रागमविभागः

सं०सं०वि०वि०वाराणसी।

पं०सं०

दि०

## "पुराणेषु सांख्ययोदर्शनम्"

# *विषयानुक्रमणिका*

| विषयः | पृष्ठसंख्या |
| --- | --- |

# *भूमिका*

अनादिकालतः प्रसृतप्रवाहे दुरवगाहे परः सहस्त्रवाधेऽगाधेऽस्मिञ्जगज्जलनिधौ निमज्जतां कञ्चिदनपायमुपायमपश्यतां संसीदतां विषीदताञ्च जनानामुद्धरणाय दर्शनादृते नान्याऽस्ति सुदृढा तरिः, नापि कश्चिदन्यः धीवरो धीवरः प्रभवेदन्तरेण विश्वनियन्तारं सर्वान्तर्यामिनं निखिलगुणगणावासं जगन्निवासं वारिदभासं भगवन्तं वासुदेवम्। अतो दर्शनस्य भगवतश्च महिमानं नेशः शेषोऽप्यशेषतया वक्तुं वद्धपरिकः स्यात् किमुत मादृशोऽल्पज्ञो जनः प्रभवेत्तथापि "अथावाच्यः सर्वः स्वमतिपरिणामावधि गृणन्" इति महिम्नः स्तोत्रपद्यानुसारं यत् किञ्चदुच्यते तदखिलब्रह्माण्डदीपदीपाय भगवते भास्कराय दीपप्रदर्शनमिव भक्तिप्रदर्शनमात्रमेवास्ति। मानवजीवनस्य प्रमुखं लक्ष्यं भगवत्प्राप्तिरेव पुराणानां परमं प्रयोजनमध्यवसीयते पुराणमर्मज्ञैः।

ये च पुराणानामध्ययनं विना वेदानामर्थमवगन्तुं चेष्टन्ते, तेषां वास्तविकं वेदार्थज्ञानम् संभवि, यत एकस्यैवाखण्डस्य सार्वजनीनस्य धर्मस्य प्रतिपादकाः, एकस्या एवखिललोककल्याणकारिण्या भारतीयसंस्कृतेश्च परिपोषका वेदा रामायणं महाभारतं पुराणानि च सन्ति। अत एवोक्तं मत्स्यपुराणे भगवता व्यासदेवेन येनाङ्गसहिताश्चत्वारो वेदा अधीताः, परं यदि पुराणं नाधीतम् , तर्हि तस्य वेचक्षण्यं न सम्भवति।

पुराणानां महत्त्वं विविधाभिर्दृष्टिभिरवगम्यते। धार्मिकदृष्ट्या पुराणानि वेदविहितस्यैव धर्मस्य भावगम्यया सरलया भाषया विशदं वर्णनं कुर्वन्ति। पुराणानां सामाजिकं महत्त्वमपि न्यूनं नास्ति। प्राक्तनस्य समाजस्य स्वरूपमस्माभिः पुराणैरेवोपलभ्यते। पौराणिकस्येतिहासस्य पुष्टिस्तु तत्र तत्रोपलब्धैः शिलालेखै वैदेशिकानां यात्रावर्णनेन चेदानीं प्रचुरमात्रायां बोभूयते। भौगोलिकदृष्ट्या च पुराणेषु तीर्थानां विशदं वर्णनं विद्यते, येन तत्तत्स्थानानां विस्तृतस्य भूगोलस्य सम्यग्ज्ञानं भवति। यत्सहयोगेन प्रसिद्धानां भूभागानां समीचीनतया ज्ञानं भवितुमर्हति।

पुराणानि गौरवदृष्ट्या अत एव दृश्यन्ते, यदत्र वैदिकशिक्षाया पुष्टिः कृताऽस्ति, दृष्टान्तद्वारा च वेदार्थानामेव विशदीकरणं विद्यते।

पुराणानां प्रमुखं प्रयोजनं वेदविहितानां तत्त्वानां जनसाधारणेषु प्रचारो विद्यते। नहि केवलं भारतवर्षे एव, किन्तु भारताद्बहिर्देशेष्वपि पुराणैर्वैदिकविचार-धारायाः प्रवाहविस्तारस्य सुयशो लब्धम्। पुराणानां कृपया सर्वसाधारणा मनुष्याः स्वं स्वं जीवनं संयमशीलं विधाय कल्याणमार्गप्रवृत्तेरधिकारं प्राप्तवन्तः। वैदिकधर्मस्य लोकप्रियत्वनिर्माणश्रेयः पुराणैरेव प्राप्तमस्ति। पुराणानि समस्तानां विद्यानामक्षयाः कोषाः कथ्यन्ते।

अद्यत्वे यद्यपि वेदानां सर्वाः शाखा नोपलभ्यन्ते, तथापि दिव्यज्ञानसम्पन्नः त्रिकालदर्शी महर्षिर्वेदव्यासस्तासां मूलविषयं पुराणेषु यत्र तत्राङ्कितवानस्ति, येनेदानीं बह्वीनां वेदशाखानामनुपलब्धावपि तासां प्रतिपाद्यविषयाणामवगाहनं क्रियत एव। पुराणेषु सर्वेषां कृते नैकमेव किमपि तीर्थं निश्चितमस्ति, किन्तु भारतवर्षस्य सर्वेषु प्रान्तेषु पवित्राणि तीर्थानि सन्ति, सर्वत्र च भगवतो लीलाऽभवत्। एवं पुराणानि समस्तां भारतभूमिं चिन्मयस्य भगवतो लीलाधामरूपेणोपस्थापन्ति। पुराणानां कृपयैकैकस्य भारतवर्षवासिनः कृते समस्ता भारतभूमिः सत्कार्या स्नेहमयी जननीव पूज्या आदरणीया चास्ति।

योगिनो हि सांख्यदर्शनाभिमतामेव सृष्टिप्रक्रियां तदभिमतान्येव तत्त्वानि तदङ्गीकृतान्येव त्रीणि प्रमाणानि चाभ्युपगच्छन्तः केवलं तद्विलक्षणम् 'क्लेशकर्म-विपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' (१।२४) इति लक्षणलक्षितमीश्वरं स्वीकृत्य स्वकीयं दर्शनं नास्तिकताकलङ्कपङ्कतः क्षालयाम्बभूवुः। अपि च चित्तवृत्तिनिरोध रूपसमाधिसंप्रज्ञातासंप्रज्ञाततत्त्वाभ्यां सविकल्पकनिर्विकल्पकत्वापरपर्यायं द्विधा भिद्यमानं कैवल्यं मन्वते। चित्तवृत्तिनिरोधरूपस्य योगस्य यमनियमासनप्राणायाम प्रत्याहारधारणा-ध्यानसमाधयोऽष्टावङ्गानि च स्वीकुर्वते। योगस्य प्राधान्येन कैवल्यफलकत्वेऽप्य-वान्तरफलानि विभूतयो विजृम्भन्ते। अत एव समाधि-साधन-विभूति-कैवल्याख्यान् चतुरः पादान् प्रणिनाय भगवान् पतञ्जलिः। तत्र प्रथमे पादे मुख्यतया

चित्तवृत्तिनिरोधरूपस्य योगसमाधेरभ्यासवैराग्ययोः साधनस्यास्ति विवेचनम्। द्वितीये पादे विक्षिप्तचित्तस्य समाधिसिद्धये योगस्याष्टावङ्गानि उक्तानि। तृतीये पादे विभूतितत्त्वज्ञानमन्तरा भगवत्तत्त्वज्ञानमपि दुःशकमिति तत्र श्रद्धोत्पादनाय विभूतिज्ञानमावश्यकमिति कृत्वा योगजविभूतयः प्रदर्शिताः चतुर्थे न पादे कैवल्यस्य विवेचनं जातम्। अस्य च विजातीयप्रत्ययनिरोधद्वारा निदिध्यासनसिद्धिः प्रयोजनम्।

चतुर्दशभुवनविलसिताण्डकटाहवर्तिजरायुजाण्डजस्वेदजोदभिज्ज-चतुर्विधभूतग्रामे एक एवेश्वरः पटेषु तन्तुवदोतप्रोत अभाति। यद्यपि प्रतिदर्शनं तत्लक्षणं भिद्यते, तथापि ऐश्वर्यार्थकादीशधातोः "स्थेशभासपिसकसो वरच्" (३।२।१७५) इति पाणिनीयसूत्रेण वरचि प्रत्यये कृते निष्पन्नस्येश्वरशब्दस्य पूर्वोक्ति लक्षणे पुरुषविशेष इति कथनेन सांख्यदर्शनोक्तो बहुपुरुषवादो निराकृतः। अर्थाद् यादृशः पुरुषः सांख्यैर्मन्यते तद्विलक्षणः पुरुषो योगे ईश्वरपदवाच्य इति पतञ्जलेराशयः। एवं पुरुषबहुत्वे आपत्तिमुदभाव्य पतञ्जलिना ईश्वरलक्षणे विशेषपदमुपात्तम्।

साधनाप्रधानत्वाद् योगदर्शने कर्मतत्त्वं विस्तरेण विवृतम्। कर्माशयः कर्मसंस्कारः। विपाकादयो विषया अपि उत्सर्गापवादन्यायेन विवृताः। ईश्वरप्रणिधान-विचारप्रसंगादीश्वरस्वरूपविचारोऽपि योगदर्शनस्य मुख्यविषयेष्वन्यतमः। स

साधनसमाधिविचारः खलु योगदर्शनस्यासाधारणो विषयः। सांख्ये तु पदार्थरूपेणैव एषामुल्लेखः। क्लेशनां विभूतीनां च चार्चापि योगाभ्यासोपकारिणीं मत्वा पतञ्जलिना प्रपञ्चिता। पुराणेषु महाभारते च योगविद्याप्रस्तावे इमे विषयाः सम्यगुपदर्शिताः। चित्तस्य स्वरूपं वस्तुचित्तसम्बन्धः, चित्तनिरोधः, एकाग्रतादिपरिणामाश्चेत्यादयो विषयाः कैवल्यार्थमवश्यं ज्ञेयाः। अत एव योगसूत्रस्य चतुर्थे पादे कैवल्यविषयकं तत्त्वज्ञानमान्विक्षिकीपद्धत्या विवृतम्। अर्वाग्दर्शिनां बौद्धादीनां चित्तं न शाश्वतं निरोधयुक्तम् चित्तातिरिक्तस्य द्रव्यस्यानधिगतत्वात्। व्यक्ताव्यक्तज्ञरूपाणां पदार्थानां प्रविभागपूर्वकमसंकीर्णं ज्ञानं खलु सांख्ययोगिनां सम्यग्दर्शिनामेवेति संक्षेपः।

योगिभिर्योगबलेन मनः स्थिरीकृत्य देहाभ्यन्तरे कुत्र किमस्तीति सम्यग् ज्ञात्वा मानसिकीनामवस्थानां विचारं विधाय यत्र तत्र मन्त्राणां रहस्याविर्भावः कृतः। मानवशरीरेऽनेकानि चक्राणि तत्र प्रत्येकं चक्रे स्नायुकेन्द्रे चालौकिका शक्तिर्निहितास्ति। अनुद्बुद्धां तां प्राणवायोः साहाय्येन जागृतां कृत्वा साधको दूरदर्शन-दूरश्रवण-परचित्तज्ञान-परकायप्रवेश-आकाशारोहण यथेच्छदहत्यागादीनां शक्तिं प्राप्नोति।

योगिनः सर्प-मण्डूक-वृश्चिकादिभ्यो जन्तुभ्य आसन-मुद्रा-प्राणायामप्रकारं ज्ञात्वा स्वास्थ्यस्य आयुषश्च वृद्धिं कृतवन्तः। प्राचीनानां महात्मनां ऋषीणाञ्च

योगबलेन रोगदूरीकरणवार्ता प्रसिद्धैवास्ति। यत्र तत्र साधूनां साधकानाञ्चाद्भुता योगविभूतीर्दृष्ट्वा जनाः विस्मिता भवन्ति।

योगिनः पञ्चभूतेषु प्रभुत्वं प्राप्य आश्चर्यकरमलौकिकं कार्यं कर्तुं प्रभवन्तीत्यस्य विशेषविवरणं पातञ्जयोगसूत्रस्य तृतीये विभूतिपादे उपलभ्यते। योगिनां मन्त्रौषधसमाधि-जनितां सिद्धिं दृष्ट्वा वर्तमाना वैज्ञानिका अपि विस्मिता भवन्ति।

योगबलेन श्रीशङ्कराचार्यादबुद्धादयः साधकाः सुखदुःखेर्ष्याद्विषादिद्वन्द्वातीता जितेद्रियाः शान्तचित्ता आत्मदर्शिनो भूत्वा पृथिव्यां शान्तिस्थापने सहायका अभूवन्। एते आत्मतत्त्वं ज्ञात्वा द्वन्द्वातीताः सन्तो निर्वाणं प्राप्यामरा जाताः। मानवानां कृते वास्तविकशान्तिसुखमुक्तिमार्गाश्च सुलभीचक्रुः। विश्वस्मिन् यत् किमपि सारतत्त्व-माविष्कृतम् , तत्राधिकांशो योगबलेनैव जातः। समस्ता वैज्ञानिका दार्शनिकाश्चाविष्कारा योगद्वारैकाग्रतासाधनस्य फलमस्ति।

योगो हि भारतवर्षस्यास्त्यमूल्यो निधिः। दर्शनशास्त्रम् , स्मृतिपुराणादीनि समस्ता विद्या योगाभ्यासजनिताया ऋतम्भरप्रज्ञाया एव मधुरं मनोहरं च फलमस्ति। अत एवार्यसाहित्ये योगस्य मुक्तकण्ठेन गुणगानं कृतमस्ति। एकाग्रता-योगसमाधिशब्दा एकस्यैवार्थस्य प्रतिपादकाः सन्ति।

विचारे क्रियामाणेऽयमेव निष्कर्षो निःसरति यद् विश्वस्य किमपि व्यावहारिकं पारमार्थिकं च कार्यं नैवंविधं विद्यते यच्चित्तस्यैकाग्रतां विना निष्पद्येत। अद्यत्वे नवा नवा वैज्ञानिका अविष्कारा अपि अमरकीर्तीनां न्यूटनप्रभृतिवैज्ञानिकानामेकाग्रताया एव चमत्काराः सन्ति। अतः सर्वे प्राणिना एकाग्रतारूपस्य योगेस्य शरणेऽवश्य-मागच्छन्ति। अन्यथा ते किमपि लौकिकं पारलौकिकवाऽभीष्टं सिद्धं कर्तुं न प्रभवेयुः।

..............................

# *प्रथमोऽध्यायः*

**विषयः=** **(क) दर्शनपरिचयः**

**(ख) सांख्यदर्शनस्य परिचयः**

**(ग) योगतन्त्रदर्शनस्य परिचयः**

## दर्शनपरिचयः

दर्शनमिति पदं दृश्यते प्रेक्ष्यते ज्ञायते चानेनेति व्युत्पत्त्या 'दृशिर प्रेक्षणे' इति धातोः करणे ल्युटि प्रत्यये सति सिध्यति। "दृष्टिर्ज्ञानेऽक्षिण दर्शने" इत्यनुशासनात् प्रेक्षणं ज्ञानञ्च दर्शनशब्दार्थः। तथा चोक्तम्---

**यदाभ्युदयिकं चैव नैःश्रेयसिकमेव च।**
**सुखं साधयितुं मार्गं दर्शयेत् तद्धि दर्शनम् ।।०।।**[१]

यदा दर्शनशब्दो दृश्यते साक्षात् क्रियते आत्मा अनेनेति दृशेः करणल्युटा व्याक्रियते। तदाऽदसीयश्चरम उद्देश्य आत्मसाक्षात्कार एव फलति। तदीयान्येव

१- भा०सं० १।२७।

साधनानि तैः तैः मुनिभिः स्वस्वज्ञानानुसारं निरूपितानि। सांख्ये संख्यावद्भिः प्रकृतिपुरुषयोः ज्ञानम् , मीमांसामांसलैः कर्मज्ञानम् , न्यावैशेषिकैः षोडशपदार्थानां सप्तपदार्थानां वा उद्देशलक्षणपरीक्षाभिः तत्त्वज्ञानम् , वेदान्तिभिः आत्मपरमात्मनोरभेद-ज्ञानम् , योगिभिः योगसमाधिजं ज्ञानं च तत्र साधनमाकलितम्।

अथवा दर्शनं नाम तत्त्वातत्त्वे दृश्येते अनेनेति व्युत्पत्तया तत्त्वातत्त्वविवेचन-शास्त्रविशेषः। दर्शनपदप्रवृत्तौ दृशेः ज्ञानसामान्यार्थतया चेतनाचेतनभेदेन विभिन्नस्यार्थ-समुदायस्य तत्त्वानुसन्धानमेव निमित्ततया समुन्मीलति। तत्त्वानुसन्धानं च प्रमाणमात्रं शरणीकुरुते। प्रमाणानि च प्राधान्येन प्रत्यक्षानुमानशब्दा एव प्रतीतिविषयतामावहन्ति। वस्तुतो दर्शनशब्दे प्रेक्षणार्थकोदृशिः न समन्वेति। नहि शब्दैः चाक्षुषं प्रत्यक्षं जन्यते। अतोऽत्र साक्षात्कारमात्रार्थको दृशिरभ्युपगन्तव्यः। तथा च दृश्यते साक्षात् क्रियते अध्यात्मज्ञानपुरः सरं परमपुरुषार्थोऽपवर्गो येन तद्दर्शनम्। एतद्व्युत्पत्तिबलात् सुतरां दर्शनव्यपदेशः समञ्जसः कपिलकणादिसूत्राणां तत्तद्व्याख्यानभूतानां चेतरेषां निबन्धानाम्। काव्यनाट्यालङ्कारसूत्राणि सन्तीति न तेषु अतिव्याप्तिः।

## दर्शनभेदः

अस्ति परलोकादिकमिति मतिर्यस्य सआ स्तिकः, नास्ति परलोकादिकमिति मतिर्यस्य स नास्तिक इतिव्युत्पत्त्या 'अस्ति नास्ति दिष्टं मतिः' (४।४।६०) इति

पाणनीयसूत्रेण ठक्प्रत्यये विहिते सति सिध्यत आस्तिकनास्तिकशब्दौ। तदेवं आस्तिकनास्तिकभेदेन दर्शनानि द्विविधानि---अस्तिकदर्शनानि नास्तिकदर्शनानि च। तत्र चार्वाक-माध्यमिक योगाचार-सौत्रान्तिक-वैभाषिक-अर्हतभेदेन षड्विधाः सन्ति नास्तिकाः। एभिः वेदविरुद्धानि रचितानि षड्दर्शनानि। तानि सर्वाणि वेदविरुद्धत्वात् त्याज्यानि। आस्तिकदर्शनान्यपि न्याय-वैशिषिक-सांख्य-योग मीमांसा-वेदान्तभेदेन षडेव सन्ति। तानि चैतानि सर्वलोकोपकारकैः परमकारुणिकैः महर्षिभिः आस्तिकमतसमाधानार्थं निराकरणार्थञ्च नास्तिकमतानां प्रणीतानि। सर्वेषां भारतीय-दर्शनानां साक्षात्परम्परया वा यथाकथंचित् परमपुरुषार्थमोक्षसम्पादनमेव प्रयोजनम् तदर्थमेव तेषां प्रवृत्तेः।

वेदे काण्डत्रयं प्रोक्तम्--- (१) कर्मकांण्डम् , (२) उपासनाकाण्डम् , (३) ज्ञानकाण्डं च। तत्र मलदोषनिवृत्तयेऽन्तःकरणशुद्धये च प्रथमस्य कर्मकाण्डस्य, ततो विक्षेपदोषापनुत्तये चित्तैकाग्रतास्थितये च द्वितीयस्योपासनाकाण्डस्य, तदनन्तरञ्चा-वरणदोषनिवारणार्थमात्मसाक्षात्कारकरणार्थञ्च तृतीयस्य ज्ञानकाण्डस्यानुष्ठान-मत्यावश्यकमिति त्रिकाण्डस्य वेदस्यावश्यकतोपयोगिता च निर्विवादं प्रतीयते। एंवम् 'आत्मा व अरे द्रष्टव्यः' इति श्रुत्यादेशतः आत्मसाक्षात्कार एव परमः पुरुषार्थः, तदर्थमेव 'श्रवणमननिदिध्यासनानि' त्रीणि साधनानि क्रमशः समाश्रयित-व्यानि। तत्र श्रवणसाधनसिद्धये महर्षिजैमिनिकृतं पूर्वमीमांसादर्शनम् , वेदव्यासकृतं

वेदान्तदर्शनं च, मननसाधननिष्पत्तये गौतममुनिप्रणीतं न्यायदर्शनम् , कणादमहर्षिकृतं वैशेषिकं दर्शनं महामुनिकपिलविरचितं सांख्यदर्शनञ्च। तथा निदिध्यासनसाधनसम्पत्तये भगवत्पतञ्जलिकृतं योगदर्शनं समुपयुज्यते।

एवं सर्वैरपि दर्शनकारैः आत्मसाक्षात्काराय साधनानि 'श्रवणमनननिदिध्यासनानि' यथाशास्त्रं प्रतिपादितानि। अतः समेषां दर्शनानां सम्यग्ज्ञानसम्पादनमत्यावश्यकम्। अनन्तब्रह्माण्डभाण्डोदरेऽसंख्याताः पदार्था दृष्टिगोचरीभवन्ति। तत्र प्रत्येकपदार्थस्य नामलक्षणपरीक्षाभिः पूर्णतया ज्ञानसम्पादनं दुःसाध्यमेव। अत एवोक्तं शम्भुगीतायाम्----

> **इदं ज्ञेयमिदं ज्ञेयं यः सर्वं ज्ञातुमिच्छति ।**
> **स तु वर्षशतेनापि नान्तं याति पृथक् पृथक् ।।०।।**

एतेदवावधार्य विचार्य च साक्षात्कृतधर्माणो महर्षयः सूक्ष्मया अलौकिकदृष्ट्या नखिलपदार्थानाममूलचूलमनुसन्धानं विधाय स्वस्वानुभूतज्ञानप्रचाराय षड्दर्शनसूत्राणि रचयामासुः, सुसाध्याञ्चक्रुश्च दुःसाध्यमपि तत्त्वज्ञानस्य सम्पादनम् इत्यत्र नास्ति कस्यापि विचारवतो विवादः।

दर्शनसंख्याविषये तैर्थिकानां विविधानि मतानि उपलभ्यन्ते। तथाहि केचित्

पूर्वोत्तरमीमांसाद्वयम् , सेश्वरनिरीश्वरसांख्यद्वयम् , षोडशपदार्थसप्तपदार्थाभिधायि न्यायवैशेषिकदर्शनमिति षड्दर्शनानि अभिदधति। तत्र पूर्वमीमांसा जैमिनीयं मीमांसादर्शनम्। उत्तरमीमांसा वैयासिकं वेदान्तदर्शनम्। सेश्वरं सांख्यं पातञ्जलं योगदर्शनम्। निरीश्वरं सांख्यं कापिलं सांख्यदर्शनम्। षोडशपदार्थाभिधायी न्यायो गौतमीयं न्यायदर्शनम्। अभावसप्तमः षट्पदार्थाभिधायी न्यायः काणादं वैशेषिकदर्शनमभिधीयते।

अपरे आस्तिकनास्तिकदर्शनं द्वैविध्यमुपकल्प्य पूर्वोक्तानि षड् आस्तिक-दर्शनानि षट् च नास्तिकदर्शनानि अभिधाय द्वादशदर्शनान्याचक्षते विपश्चितः। सर्ववेदभाष्यकर्त्रा माधवेन तु स्वकीये सर्वदर्शनसंग्रहे षोडशदर्शनानि विवृतानि।

**प्रस्थानभेदकृन्मधुसूदनसरस्वतीपादास्तु---**

**पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः ।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ।।०।।**[१]

इति याज्ञवल्क्योक्तदिशा चतुरो वेदान् षट् तदङ्गानि पुराणन्याय-मीमांसाधर्मशास्त्राणि चेति चत्वारि च वेदस्योपाङ्गानि दर्शयित्वा उपपुराणानि

---

१- भा०सं०१।३।

पुराणेऽष्वन्तर्भाव्य वैशेषिकं न्यायेऽन्तः पात्य वेदान्तं मीमांसायां गणयित्वा रामायणं महाभारतं सांख्य-पातञ्जल-पाशुपत-वैष्णवदर्शनानि च धर्मशास्त्रे संख्याय (१४) आयुर्वेद-धनुर्वेद-गान्धर्ववेद-अर्थशास्त्राणीति चतुर उपवेदांस्तत्र संयोज्याष्टादश आस्तिकशास्त्रप्रस्थानानि दर्शयन्ति। नास्तिकप्रस्थानानि वेदबाह्यत्वात् पुरुषार्थनुपयोगीन्याकलय्य उपेक्षणीयानि मन्यन्ते। परमद्यत्वे न्याय-वैशेषिक-सांख्य-योग-मीमांसा-वेदान्तानीति षड्दर्शनानि एव दर्शनशब्देन अभिधीयन्ते। तेषु च आस्तिकनास्तिक-प्रस्थानपार्थक्येन द्वैताद्वैतराद्धान्तभेदेन च अन्योऽन्यभिन्नतया च भासमानेष्वपि भूयस्सुदर्शनेषु सूक्ष्मसमीक्षया वस्तुतः षडेव दर्शनानि मनीषिभिर्निर्णीतानि परमप्रसिद्धानि गभीरतरविचारचणानि अध्ययनाध्यापनयोरति प्रसिद्धानि सन्ति।

ननु न्याय-योग-वेदान्तदर्शनेषु वेदेश्वरयोरभ्युपगमेन संगच्छतां नाम तेषा मास्तिकदर्शनत्वम्, किन्तु वैशेषिक-सांख्य-मीमांसादर्शनेषु पुनः कथङ्कारमास्तिक-दर्शनत्वं शक्यमवस्थातुम्! आद्ये ईश्वरानङ्गीकारेऽपि शब्दप्रामाण्यानङ्गीकारेण वेदप्रामाण्यानभ्युपगमात् अन्त्योः वेदप्रामाण्याभ्युपगमेऽपि ईश्वरास्वीकारादिति चेत् अत्रोच्यते--- देहादिव्यतिरिक्तमात्मानमीश्वरञ्चानङ्गीकुर्वतां चार्वाकादीनां मतनिरासायैव विंशेषतः प्रयतमानेन महर्षिणा कणादेन देहादिव्यतिरिक्तौ आत्मेश्वरौ साधयित्वा तन्मतमपाकृत्य कृतकृत्यं मन्येन वेदप्रामाण्यानभ्युपगमेऽपि 'यतो वा ईमानि भूतानि जायन्ते', 'विश्वस्य कर्ता भुवनस्य गोप्ता' इत्यादिश्रुतिभिः विश्वनिर्मातारमीश्वरं

स्वीकुर्वता कण्ठतो वेदप्रामाण्यानङ्गकारेऽपि स्वरसतोऽभ्युपगम्यत एवेति कथञ्चिदास्तिकत्वमेव वैशिषिकदर्शनस्य।

सांख्यदर्शनं तु भगवदन्यतमावतारेण महर्षिणा कपिलेन वेदमाधृत्यैव प्रवर्तितमिति भवति तस्यापि निर्विचिकित्सितमास्तिकदर्शनत्वम्।

"ईश्वरासिद्धेः" इति सांख्यसूत्रेणेश्वरप्रत्याख्यानं तु गुणत्रयसाम्यावस्थारूपया प्रकृत्यैव प्रपञ्चोत्पत्तिनिष्पत्तौ न तदर्थमीरश्वरस्यावश्यकतेत्यभिप्रायकम्। अत एवोक्तं विज्ञानभिक्षुणा सांख्यप्रवचनभाष्ये "सांख्यशास्त्रस्य पुरुषार्थ-तत्साधनप्रकृतिपुरुष-विवेकौ एव मुख्यो विषय इतीश्वरप्रतिषेधांशबाधेऽपि नाप्रामाण्यम् , यत्परः स शब्दार्थ इति न्यायात्। अन्यया 'ईश्वराभावात्' इत्येवोचीत।

मीमांसादर्शनं तु आमूलचूलं वेदार्थविचारयितुमेव समारब्धमिति न शक्यते तत् कथमपि नास्तिकतया अभिषेक्तुम्। ईश्वरो नाभ्युपगम्यते इति चेत् , सत्यम् , कर्मण एवं पुरुषार्थचतुष्टयोपलब्धिविश्वस्थित्याद्युपत्तौ नावश्यकत्वमीश्वरस्येति कर्म स्यंतुत्यर्थमिव तैः तथाभ्युपगम्यते। द्रव्यदेवतारूपं कर्मस्वरूपद्वयं मन्यमाना मीमांसका मन्त्रमय्या देवतायाः स्वीकारात् प्रकारान्तरेण स्वीचक्रुरेवेश्वरमिति न मीमांसादर्शनमपि

शक्यं लेशतोऽपि नास्तिकतामुपालम्भयितुम्। अत एवोक्तं पराशरोपपुराणे----

**अक्षपादप्रणीते च काणादे सांख्ययोगयोः ।**

**त्याज्यः श्रुतिविरुद्धोंऽशः श्रुत्यैकशरणैर्नृभिः ।।[1]**

**जैमिनीये च वैयासे विरुद्धांशो न कश्चन ।**

**श्रुत्या वेदार्थविज्ञाने श्रुतिपारङ्गते हि ते ।।०।।**

एवञ्च न्यायादीनि षडपि दर्शनानि सन्त्यास्तिकदर्शनानीत्यत्र नास्ति काचिद् केषाञ्चिदपि विप्रतिपत्तिः।

दर्शनशास्त्रं हि भारतवर्षस्यास्ति सर्वोत्तमो निधिः। एतदेव भारतं देशान्तरेभ्यः समुत्कर्षयति समुन्मूलयति च पाश्चात्त्यविपश्चितां वस्तुविवेचनचातुर्यस्य सार्वजनीन-समस्यासमाधानधूर्यत्वस्याभिमानम्। वेदप्रामाण्यानभ्युपगन्तृभिः चार्वाकबुद्धजिनैः प्रवर्तितानि दर्शनानि नास्तिकदर्शनानि। वेदवद्धादरैर्महर्षिभिः गौतम-कणाद-कपिल-पतञ्जलि-व्यास-जैमिनिभिः विचारितानि षड्दर्शनानि आस्तिकदर्शनानि इति व्यवह्रियते। आस्तिकदर्शने पूर्णप्रज्ञादिदर्शनानां समावेशे सत्यपि न्यायादिदर्शनानामतिप्रसिद्धतया भूयस्त्वेन श्रुत्यनुरोधितया च तेषां तद्द्वारकं षाड्विध्यमक्षतमेव। यद्यपि आस्तिकशब्दः परलोकमात्रस्यास्तित्वमुपगच्छतः पुरुषस्यास्तिकत्वमवगमयति, तथापि परलोकपदस्य

१- पराशरपुराण १९।२९-३०।

तत्रोपलक्षकत्वेन परलोकविदमीश्वरञ्चावगच्छन् पुरुषः आस्तिक इति व्यपदेशेन लोके श्रद्धीयते एव।

तथा च ज्ञानविज्ञाननिधानानम्नायं साक्षात्परम्परया वा परलोकमीश्वरञ्च अभ्युपगच्छन्ति षड्दर्शनानि एव आस्तिकदर्शनेषु अवस्थातुं शक्यन्ते, नान्यानि।

## आतिस्कदर्शनानामाविर्भावक्रमस्य दिग्दर्शनम्

दर्शनशास्त्रं हि आध्यात्मिकतत्त्वविवेचकैः मनीषिभिः अनुभूतस्य तथा स्यास्ति परिचायकं साहित्यम्। नूनं विनिर्मिता जगन्नाटकसूत्रधारस्य प्रधाननटद्या प्रकृत्या विश्वस्मिन् भारतवर्षमेव आत्मक्रीडाया। वाटिका भौतिकजीवननिर्वाहकाणि साधनानि चिरात् परिपूरितानि। अत महर्षिभिः तपसा स्वाध्यायबलेन चाध्यात्मतत्त्वानां विशिष्टं चिन्तन प्रकृतेः रहस्यमेवोद्घाटितम् , प्रत्युत स्वकीयजीवनमपि तदीय-तत्त्वानुशीलनद्वारा पूर्णतां नीतम्।

कोऽहम्! कुत आयातः! दृश्यमानमिदं विश्वं किमति! एतेन को मे सम्बन्धः! किमस्ति जीवनस्योद्देश्यं तत्साधनस्य च के उपायाः! एवमादीनां महीयसां प्रश्नानामुत्तरात्मा विविधसमस्यानां समाधायको यः सिद्धान्तो भारतीयै-

विचारचणैरभिव्यञ्जितः, तस्यैव विवेचनं भारतीयदर्शनस्य विभिन्नासु धारासु समुपलभ्यते।

पूर्वत एवास्मिन् देशे आत्मतत्त्वस्यानुसन्धानं प्रवर्तितम् अस्यानुशीलनं चिन्तनशीलव्यक्तिभिरेव क्रियते। तपस्विनः साधनासम्पन्नाश्च योगिनः स्वयोगबलेन अन्तः करणस्य बाह्येन्द्रियाणां समुत्कर्षं संसाध्य तत्त्वं ज्ञातुं प्रभवन्ति स्म। लौकिकप्रत्यक्ष द्वारा सत्यस्य साक्षात्कारो न सम्भवतीत्यतो नैतिकजीवनस्य उत्कर्षसम्पादनं समाधेरभ्यासः विभिन्नसाधनप्रणालीनामनुशीलनञ्च आवश्यकम्। यमनियमादिभिः अन्तःकरणस्य शुद्धौ सत्यामेव चिद्दर्पणे आत्मनो बिम्बः प्रतिफलति। अतो योगसाधनद्वारा अन्तःकरण शुद्धिः परमावश्यकीति समेषां योगविदां मतम्।

न्यायकुसुमाञ्जलौ उदयनाचार्येणापि श्रवणानन्तरमेव दार्शनिकालोचनाय पदं स्थिरीकृतम्----

**श्रोतव्यः श्रुतिवाक्येभ्यो मन्व्यश्चोपपत्तिभिः ।**
**मत्वा च सततं ध्येयं एते दर्शनहेतवः ।।०।।**

न्यायकुसुमाञ्जलौ उदयनाचार्येणापि श्रवणानन्तरमेव दार्शनिकालोचनाया पदं स्थिरीकृतम्----

**पदचर्चेयमीशस्य मननव्यपदेशभाक् ।**
**उपासनैव क्रियते श्रवणानन्तरागता ।।०।।**

यद्यपि अतिप्राचीनकाले शृङ्खलाबद्धा दार्शनिकविचारा न प्रचलिताः, तथापि दार्शनिकचिन्तायाः प्रस्थानगतवैशिष्ट्यं पूर्वत एवासीत् प्रचलितमित्यनुमीयते, यच्च उपनिषदां पुराणानां महाभारतस्य बौद्धानां पालिसाहित्य च पर्यालोचनया अनुमोद्यते।

षण्णां दर्शनानां विकासस्य क्रमः प्रायः समान एव। सर्वहप्राचीनास्ते दर्शन ग्रन्थाः, ये किल सूत्ररूपेण निबद्धा। कालान्तरे तेषां रहस्यं स्फोटयितुं तत्र भाष्याणि लिखितानि, तानि च सुबोधानि विधातुं तेषां वार्त्तिकादीनि सञ्जातानि।

(१) तत्र न्यायसूत्राणां रचयिता अक्षपादो महर्षिः गौतमः, भाष्यकारो वात्स्यायनः, वार्त्तिककारश्चोद्द्योतकरः।

न्यायदर्शनविकासस्य द्वे धारे दृष्टिगोचरीभवतः। एका गौतमादारब्धा या षोडशपदार्थानां यथाथनिरूपणेन पदार्थमीमांसात्मिका प्रणाली प्रोच्यते। द्वितीया प्रमाणमीमांसात्मिका प्रणाली या द्वादशशताब्दिवर्तिनः गंगेशोपाध्यायस्य तत्त्वचिन्तामणितः प्रवर्तिता। प्रथमां धारां प्राचीनन्याय इति, द्वितीयां च नव्यन्याय इति वदन्ति तदीय तत्त्वविदो विपश्चितः।

(२) वैशेषिकसूत्रकारोऽस्ति महर्षिः कणादः, भाष्यकारः प्रशस्तपादः,

व्याख्याकारश्च शङ्करमिश्रः।

(३) सांख्यसूत्रकारो महामुनिः कपिलः, भाष्यकारो विज्ञानभिक्षुः, वृत्तिकारा अनिरुद्धादयः। सांख्यसूत्रमिव कपिलस्य तत्त्वसमासनामाऽप्येको ग्रन्थः।

(४) योगसूत्रकारो भगवान् पतञ्जलिः, भाष्यकारो महर्षिर्व्यासः, वार्त्तिककारश्च विज्ञानभिक्षुः। योगभाष्यस्य गभीरं रहस्यं प्रकटयितुं यथा वाचस्पतिमिश्रेण तत्त्ववैशारदी निर्मिता, तथैव श्रीहरिहरानन्दारण्येन भास्वती अपि रचिता। श्रीराघवानन्देन च यतिना तत्त्ववैशारदीं सरलयितुं पातञ्जलरहस्यं च प्रणीतम्।

(५) मीमांसायाः सूत्रकारो महर्षि जैमिनिः, भाष्यकारः शबरस्वामी, वार्त्तिककारश्च कुमारिलभट्टः। मीमांसादर्शने त्रीणि विशिष्टानि मतानि उपलभ्यन्ते- भाट्टमतम् , गुरुमतम् , मुरारिमतञ्च। एषां त्रयाणां मतानामुद्भावकाः सन्ति कुमारिलभट्टः, प्रभाकरः, मुरारिमिश्रश्च। कुमारिलभट्टेन सम्पूर्णे शाबरभाष्ये तिस्रः पाण्डित्यपूर्णा वृत्तयो लिखिताः, या मीमांसादर्शनस्य आधारस्तम्भाः कथ्यन्ते। १- करिकाबद्धं विपुलकायं श्लोकवार्त्तिकम् (प्रथमाध्यायीयप्रथमपादस्य व्याख्यान रूपम्)। २- तन्त्रावार्त्तिकम् (प्रथमाध्यायीय-द्वितीयपादतः तृतीयाध्यायपर्यन्तं गद्यमयं

व्याख्यानम्)। ३- टुपटीका (चतुर्थाध्यायतो द्वादशाध्यायान्ता संक्षिप्ता टिप्पणी)। तत्र वार्तिकद्वयं वैदुष्यदृष्ट्या असाधारणम्। अत्र बौद्धसिद्धान्तानां विशेषतो दिङ्नागकृत-प्रमाणसमुच्चयस्य सम्यक् समीक्षणं विधाय मीमांसाया मान्या सिद्धान्ताः विवेचिताः सन्ति।

(६) वेदान्तदर्शनस्य सूत्रकारो भगवान् व्यासः, भाष्यकाराः सन्ति श्रीशंकराचार्य-रामानुज-मध्व-निम्बार्क-बल्लभाचार्य-भास्कर-श्रीकण्ठ-श्रीपति-विज्ञानभिक्षु-बलदेवायः, वार्तिककारश्च पद्मपादाचार्यः। सुरेश्वराचार्येण श्रीशंकराचार्यस्य उपनिषद्भाष्ये वार्त्तिकानि लिखितानि। पद्मपादाचार्येण च शारीरकभाष्ये पञ्चपादिका-नाम्नी वृत्तिः कृता, यत्र चतुः सूत्र्या एव विस्तृतं विवेचनं विद्यते।

एवं दर्शनशास्त्रस्य महत्त्वं वैशिष्ट्यञ्च प्रतिपादयितुं तत्तद्विद्वद्वर्यैः समये समये विविधाः व्याख्याः विहिताः, अनेकैश्च महत्त्वपूर्णा दार्शनिकविचारोपोद्बलका स्वतन्त्रा निबन्धाश्च निर्मिताः, यैः षड्दर्शनानि अत्युत्कृष्टतां नीतानि लोके प्रसिद्धानि च जातानि।

## सांख्यशब्दार्थविमर्शः

श्रुतिस्मृतिपुराणेतिहासशैवाद्यागमेषु सांख्यस्य सिद्धान्ताः स्पष्टमुपलभ्यन्ते। अतः सांख्यदर्शनमतिप्राचीनदर्शनमस्तीत्यत्र न केषाञ्चिदपि काचिदस्ति विप्रतिपत्तिः।

कपिलेन महर्षिणा प्रणीतं दर्शनं कापिलमित्युच्यते। एतदेव दर्शनमन्वर्थतया सांख्यं संगीर्यते, सम्यक् ख्यानं संख्या सा अस्ति अस्मिन्निति सांख्यम्। यद्वा संख्या पदार्थानां गणना तत्प्रधानं दर्शनं सांख्यम्। भवति चात्र--- व्यक्ताव्यक्तज्ञसंज्ञानां महदहंकारैकादशेन्द्रियपञ्चतन्मात्र-पञ्चमहाभूतेति। त्रयोविंशतेर्व्यक्तानाम् , एकस्या अव्यक्तनाम्न्या प्रकृतेः, एकस्य ज्ञस्य पुरुषस्य चेति पञ्चविंशतितत्त्वानां दर्शनान्तरा-पेक्षयाऽधिकानां प्राधान्येन गणना।

व्याकरणानुसारं संख्यायतेऽत्रेति व्युत्पत्त्या सम्पूर्वकाच्चक्षिङ्व्यक्तायां वाचीति धातोः "आतश्चोपसर्गे" (३।३।१०६।) इत्यङि यद्वा पचादित्वाद् अचिप्रत्यये ख्यादेशे "आतो लोप इटि" च (६।४।६४) इति सूत्रेण आलोपे टापि संख्याशब्दो निष्पद्यन्ते, यस्यार्थः तत्त्वज्ञानं तत्त्वानां गणना वा भवति। संख्या मूलप्रकृत्यादिपदार्थानां गणना तत्त्वज्ञानं च विद्यतेऽत्रेति सांख्यम्। यद्वा सम्यग् विविच्य ख्यायन्ते प्रतिपाद्यन्ते प्रकटीक्रियन्ते आत्मज्ञानरूपाणि तत्त्वानि यस्मिन् तच्छास्त्रं सांख्यमित्युच्यते। अर्थात्

तच्छास्त्रं सांख्यमस्ति यत्रात्मनः प्रकृतिमहदादिजडवर्गस्य च भेदः सम्यग् दर्शितोऽस्ति। एवं सांख्यदर्शनसम्बद्ध सांख्यशब्दो न यौगिको नापि रूढ्यर्थकः, किन्तु योगरूढोऽस्ति।

एतद्विवेचनानुसारं सांख्यशब्देन महर्षिकपिलप्रणीतं सांख्यशास्त्रं तत्प्रतिपादक पञ्चविंशतितत्त्वज्ञानरूपोऽर्थश्च विवक्षितोऽस्ति। अतः संख्यया तत्त्वानां गणनया तथा तत्त्वानां विवेकेन च चेतनस्यात्मनोऽनात्मनः प्रकृत्यादिजडवर्गस्य च भेदज्ञानबोधनात् कपिलप्रणीतं शास्त्रं सांख्यशब्देनाभिधीयते। एतदभिप्रेत्यैव महाभारतस्य शान्तिपर्वणि प्रोक्तम्----

**सांख्यदर्शनमेतावत् परिसंख्यानुदर्शनम् ।**
**सांख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते ।।०।।**
**तत्त्वानि चतुर्विशत्-परिसंख्याय तत्त्वतः ।**
**सांख्या सह प्रकृत्या तु निस्तत्त्वपञ्चविंशकः ।।०।।**
**संख्यां प्रकुर्वते चैव प्रकृतिञ्च प्रचक्षते ।**
**तत्त्वानि चतुर्विंशत्तेन सांख्यं प्रकीर्तितम् ।।०।।**

अस्य व्याख्याने विज्ञानभिक्षुर्लिखति यत् संख्या सम्यग्विवेकेनात्मकथन-मित्यर्थः। संख्याशब्दस्यार्थप्रदर्शने महर्षिणा देवलेनापि कृत्यकल्पतरौ 'पञ्चविंशतिज्ञानं

सांख्यम् इत्युक्तम्। सांख्यप्रयोजनमभिदधता तेन महाभारतस्य शान्तिपर्वणि मोक्षधर्म पुण्यपापक्षयार्थं सांख्यज्ञानस्य विधानमुक्तम्[१] मत्स्यपुराणेऽप्येवंविध एवाशयो व्यक्तीकृतोऽस्ति।[२]

एभिरुद्धरणै स्पष्टं प्रतीयते यत् सांख्यशब्दस्यार्थः संख्या तत्त्वज्ञानं वाऽस्ति एतन्निर्देशकं शास्त्रं सांख्यशब्देनाभिधीयते। विज्ञानभिक्षुमतानुसारं गीतोक्तः सांख्यशब्दोऽपि सांख्यशास्त्रप्रतिपादकोऽस्ति।

श्रीमधुसूदनसरस्वतीप्रभृतिभिः अद्वैतव्याख्याकारैः गीतायाः सांख्यशब्दस्य यौगिक एवार्थः प्रदर्शितोऽस्ति, द्वितीये पञ्चतेऽष्टादशे चाध्याये सांख्यशब्दस्य पुरुषः आत्मा वा अर्थो गृहीतः। यथा--- एषा ते भिहिता सांख्ये बुद्धियोगे त्विमां शृणु (२।३९) इति श्लोकस्य व्याख्यां कुर्वन् मधुसूदनसरस्वती लिखति-- 'सम्यक्ख्यायते सर्वोपाधिशून्यतया प्रतिपाद्यते परमात्मतत्त्वमनेनेति संख्या उपनिषद् तयैव तात्पर्यपरिसमाप्त्या प्रतिपाद्यते यः सः सांख्यः औपनिषदः पुरुषः' अर्थात् उपाधिविनिर्मुक्तस्य परमत्मतत्त्वस्य प्रतिपादनात् उपनिषदो नाम संख्या, तया

---

१- पुण्यपापक्षयार्थं हि सांख्यज्ञानं विधीयते ।१२।१८४।

२- सांख्यं संख्यात्मकत्वाच्च कपिलादिभिरुच्यते ३।२९।

उपनिषदा प्रतिपादितं पुरुषतत्त्वं सांख्यशब्देनाभिहितम्। नीलकण्ठ-वेंकटनाथादिभिरपि गीताव्याख्यातृभिः सांख्यशब्दस्यायमेवार्थो विहितोऽस्ति।

सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः। (५।४) इत्यत्र सांख्यशब्दः सन्यासार्थे प्रयुक्तोऽस्ति। तथाहि मधुसूदनसरस्वती संख्या सम्यगात्मबुद्धिस्तांवहतीति ज्ञानान्तरङ्गसाधनतया सांख्यः सन्यासः, यथा कपिलमतानुसारं सांख्यशब्दस्यार्थो-ऽशतः सांख्यशास्त्रमस्ति, तथैवाद्वैतव्याख्यातृमतानुसारं प्रकरणतः सांख्यशब्दस्यार्थः कुत्रचिद्वेदान्तशास्त्रमप्यस्ति। यथा-- सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम्। (१८।१३) अस्य श्लोकस्य व्याख्यायां मधुसूदनसरस्वती स्पष्टं लिखति-- 'जीवो ब्रह्म तयोरैक्यं तद्बोधोपयोगिनश्च श्रवणादयः पदार्थाः संख्यायन्ते व्युत्पाद्यन्तेऽस्मि-न्निति सांख्यं वेदान्तशास्त्रं तस्मिन्नात्मवस्तु प्रतिपादके, अर्थात् जीवब्रह्मणोरैक्यज्ञानो-पयोगिनः श्रवणमननादयः पदार्थाः यस्मिन् वेदान्तशास्त्रे प्रोक्ताः सन्ति। आत्मवस्तु प्रतिपादकं तद् वेदान्तशास्त्रं सांख्यशब्देन निगद्यते।

अत्र व्याख्याकारेण वेंकटनाथेनापि 'सम्यक् ख्यायतेऽनया आत्मेति संख्या वेदान्तः संख्यैव सांख्यम्' इति व्युत्पति कृत्वा सांख्यशब्दस्यार्थो वेदान्तशास्त्रमिति कृतः।

उपनिषत्स्वपि अद्वैताचार्याणामेवंविधा सांख्यशब्दस्य व्याख्या दृश्यते। यथा श्वेताश्वतरोपनिषदि ''तत्कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपापैः'' (६।१३) इति मन्त्रे समागतसांख्यशब्दस्य व्याख्यायां विज्ञानभिक्षुर्लिखति ''सांख्यं वेदान्तमहावाक्यतात्पर्यजन्यमहं ब्रह्मास्मीति सम्यग्ज्ञानम्'' अर्थात् तत्त्वमसीत्यादि-वेदान्तमहावाकयतात्पर्याज्जायमानमहं ब्रह्मास्मीत्येवं साक्षात्काररूपं सम्यग् ज्ञानं सांख्यम्। एवमाशयमादायैवोक्तमन्यव्याख्यायां स्वामिशंकरानन्दोऽपि लिखति--- 'सम्यक् ख्यायते प्रकाश्यते आत्मतत्त्वं येन विज्ञानेन तत्सांख्यम्' अर्थात् सांख्यं नाम तद्विज्ञानमस्ति येनात्मतत्त्वं प्रकाश्यते।

नारायणीटीकायामपि--- 'संख्यायते आत्मा अनेनेति सांख्यम्,, इत्यादिव्युत्पत्या सांख्यशब्दे उपर्युक्तार्थस्यैव ग्रहणं कृतमस्ति। आसां व्याख्यानामिद-मेवास्ति तात्पर्यं यत् मुख्यतः तत्त्वमस्यादिवेदान्तमहावाक्यजन्यमात्मविज्ञानमेव सांख्यम्। एतादृशज्ञानप्रतिपादकत्वाद् वेदान्तशास्त्रमपि सांख्यशब्देनाभिधीयते। श्रवणमननादि द्वारा तादृशज्ञानसाधकः सन्यासोऽपि वेदान्ते सांख्यशब्देन प्रोच्यते। वेदान्तिनां मते तत्त्वज्ञानमेव सांख्यशब्दस्य मुख्योऽर्थः। प्रतिपादकत्वेन साधनत्वेन च शास्त्रं सन्यासश्च गौणरूपेण सांख्यशब्दस्याभिधेयो भवति। परन्तु केवलं व्युत्पत्तिलभ्यो वेदान्तिनां तत्त्वज्ञानरूपोऽर्थः न कपिलानां मान्योऽस्ति। यतो हि वेदान्तिनां सिद्धान्तानुसारमभेदज्ञानम् (जीवब्रह्मणोरैक्यज्ञानम्) एव तत्त्वज्ञानमस्ति।

एतादृशस्य ज्ञानस्यानुभवेनैव ब्रह्मस्वरूपावस्थितिरूपो मोक्षो जायते। एतादृशस्य ज्ञानस्यैव नाम तत्त्वज्ञानं सांख्यं वास्ति। किन्तु कपिलैः सांख्यशब्दस्य व्युत्पत्तिलभ्य-स्यार्थस्याङ्गीकृतावपि अत्र मुख्यतो रूढ्याश्रायेण कापिलप्रणीतसांख्यदर्शनमेव सांख्यशब्दस्यार्थो गृह्यते।

कपिलानां मते तदेव सांख्यं नाम यत् प्रकृतिमहदहंकारपञ्चतन्मात्रैका-दशेन्द्रियपञ्चमहाभूतेभ्यः चतुर्विंशतिजडवर्गेभ्यः पुरुषो भिन्न इत्येवं प्रकारकं विवेकात्म-कमात्मज्ञानं बोधयति, प्रकृतिं निरूपयति तथा तत्त्वानां संख्याञ्च विविनक्ति। एवं प्रकारकं लक्षणं महामुनिकपिलप्रणीते सांख्यदर्शने एव संघटते। यतो हि सांख्यशास्त्रं विवेकात्मकं तत्त्वज्ञानं तत्त्वानां संख्या जगतो मूलकारणं प्रकृतितत्त्वञ्च विविनक्ति। एवं कपिलप्रणीतशास्त्राय सांख्यशब्दस्य रूढत्वात् विवेकात्मकतत्त्वज्ञानरूपार्थाय यौगिकत्वाच्च कापिलानां सिद्धान्ते न सांख्यशब्दो योगरूढोऽस्ति।

आधुनिका विद्वांसो महाभारते उल्लिखितसांख्यपदं कापिलसांख्यस्यार्थं न गृह्णन्ति। हरिभद्रो रत्नकीर्तिश्च एतत् सर्वदर्शनवाचकं मन्येते।[१] एस्० रायः

१- (क) इन्डियन फिलासफी, भाग-९ पेज-५२८

(ख सांख्यसार एस०सी०सी०बनर्जी सांख्य फिलासफी पेज-३०७।

दर्शनसामान्यार्थे स्वीकरोति। लोकमान्यतिलकानुसारं पदमिदं प्रारम्भे कपिलभिक्षुभ्यः प्रयुक्तमासीत्। ततो वेदान्तसंन्यासिनोऽपि प्रयुक्तवन्तः।[1] श्रीशङ्कराचार्यानुसारं सांख्यं शुद्धात्मतत्त्वज्ञानमस्ति। स्वसैद्धान्तिकपर्यवेणद्वारा आत्मा निष्कलो निष्क्रियो निरञ्जनो निरवयवः प्रकृतिव्यक्तिरिक्तोऽस्तीतिस्वीकारात् सांख्यदर्शनस्येदं नाम अन्वर्थमस्ति।

महाभारते अस्मिन्नेवार्थे संकेतः--- "द्रोणोऽपि शास्त्रमुत्सृज्य परमं सांख्यमास्थितः (७।१९२।४९) पद्मपुराणे २।७।८। 'कश्यपद्वारा उपस्थापितम् आत्मानोऽचेतनवर्गस्य आलङ्कारिकं नाटकमस्यैवार्थस्य प्रतिपादकमस्ति--- "यदि योन्याः प्रमुच्येऽहं सांख्यं योगं समभ्यसे। इति कथनमपि अस्यैव सामञ्जस्ये प्रतीयते। चरकसंहितायां सांख्यस्य पाण्डित्ये दर्शने चार्थे प्रयोगः। अत एव वादरायणेन प्रकृतिः आनुमानिकी प्रोक्ता महाभारते (१२।३१८।३५।३५-४७) सांख्यमान्विक्षिकी साम्परायिकी परा विद्या च प्रोच्यते। सांख्यया गणनया व्युत्पादयितुं पुराणेतिहासयोः सन्ति बहवः आधाराः। अतः सांख्यस्यार्थः ज्ञानं तर्कः आध्यात्मिका-नुशासनं परीक्षणं निरीक्षणंध्यानं विचारो विश्लेषणमित्यादि सिध्यति। एभिर्युक्तत्वात् आत्मनो वास्तविकस्वभावप्रकाशनेन सांख्ययुक्तानां समेषामर्थानां द्योतकमस्ति। श्वेताश्वतरोपनिषदि (६।१३) ध्यानस्य वाचकं सदपि सांख्यं कापिलसांख्यादिभिन्नमस्ति।

---

१- गीतारहस्य पृ१५२-१५३।

आधुनिका विद्वांस इदं शुद्धज्ञानार्थे प्रयुक्तं मन्यन्ते, परं पुराणेतिहासयोः साक्ष्येण इदं सिद्धं कर्तुं शक्यते यत् प्राचीनग्रन्थेषु सांख्यं कपिलसांख्यस्यार्थे एव प्रयुक्तमस्ति। एषु ग्रन्थेषु सर्वत्र सांख्यस्य प्रयोगः सांख्याचार्यैः तथा सांख्याभ्युगमैः सह जातमस्ति। महाभारते ३०४ अध्याये तथा नारदपुराणे (५८।४७-४७) वर्णितशुकव्यासनारदसंवादे कपिलशास्त्रमोक्षशास्त्रः सांख्यं उक्तकथनस्य प्रतिपादनं भवति। देवीभागवते (८।२।१४-२०) सांख्यं परमज्ञान-सर्वज्ञाननाशकरूपेण स्वीकृतमस्ति। अस्य वर्णनस्य सद्भावे सांख्यस्य कपिलसांख्यरूपेण स्वीकारो नितान्त भ्रान्तिपूर्ण इति कथनममश्रद्धेयमेव।

क्षराक्षर-क्षेत्र-क्षेत्रज्ञ-व्यक्ताव्यक्तज्ञादिविचारः सर्वत्र पुराणेतिहासयोः सांख्यानुसारी एवोपस्थापितोऽस्ति। जलकमल-जलवारिचर-पक्ष्यादीनामुपमा जीवनमुक्तेभ्यो दत्तास्ति। तथा जलमत्स्यमशकोदुम्बरादिभिः संसारिणो जीवाः उपमिताः सन्ति। तत्त्वयोः सत्तायाः प्रतिपादकस्यैव विधोपमानोपमेयस्य स्थितिः सांख्ये एव सिध्यति।

सांख्ययोगयोः सहप्रयोगेऽपि इदमेव साधयति यत् पुराणेतिहासयोः उल्लिखितं सांख्यं कापिलं सांख्यमेवास्ति। सांख्यपदं पुराणेतिहासयोः क्वचन सांख्यदर्शनस्यार्थे क्वचिच्च सांख्याचार्यस्यार्थे प्रयुक्तमस्ति। महाभारते (१२।२१८।२) इदं पदं

पञ्चशिखाचार्यस्य विशेषणमस्ति। (१२।३०२।२-२५) श्लोकेषु द्विवारमाचार्यर्थि दर्शनार्थे च प्रयुक्तमस्ति। (१२।३०१।३-९३) श्लोकेषु एकवारमाचार्यर्थि द्विः दर्शनार्थे च प्रयुक्तमस्ति। मत्स्यपुराणे (२९०।२) दर्शनार्थे कूर्मपुराणे (२।८५) संन्यासिनोऽर्थे प्रयुक्तम्। गीतायामन्यपुराणेषु च अस्य प्रयोग एतदर्थे जातमस्ति। श्रीमद्भागवते (३।२९।१) महदादिप्रकृतिपुरुषाणां ज्ञानं सांख्यप्रोक्तम् इदं व्यक्ताव्यक्तज्ञवाचकमस्ति। शिवपुराणे पार्वती सांख्यकारिणी प्रोक्ता।

## योगदर्शनविकासक्रमः

सर्वप्रथमं वैदिकसंहितासु योगस्य संकेतमात्रमुपलम्यते। न तु स्फुटं प्रतीयते। तत उपनिषत्सु योगप्रक्रियायाः स्फुटं वर्णनं दृश्यते। योगन्दिुप्रभृतिषूपनिषत्सु योगस्याङ्ग-प्रत्यङ्गयोस्तत्प्रक्रियायाश्च पूर्णं विवरणमुपलभ्यते। यस्यानुशीलनेन पूर्वस्मिन्नपि युगे योगस्य संकेतः प्राप्यते। श्वेताश्वतरोपनिषदि द्वितीयाध्याये योगस्य सम्यग् विवेचनमस्ति। योगस्य सर्वोत्तमं फलं प्रदर्शितं वर्तते यौगिकक्रियायाश्च वर्णनमस्ति २।९, २।१०, २।१३। कठोपनिषदि १।२।१२, २।६।१२। मुण्डकोपनिषदि ३।२४, ६। एवं तैत्तिरीय-भृगुवल्ली-छान्दोग्य बृहदारण्यक-कैवल्य-गर्भ-बृहज्जावाल-अमृतबिन्दु नादबिन्दु-ध्यानबिन्दु-योगतत्त्व-योगशिखा-योगकुण्डल्युपनित्सु योगवर्णनं महत्त्वं च सम्यग् विवेचितमस्ति।

उपनिषदां मनने क्रियमाणेऽयं निष्कर्षो निःसरति यद् यौगिकं साधनं बिना पारमार्थिकी प्रवृत्तिरपूर्णैव तिष्ठति। योगस्योपादेयत्वं प्रतिपादयित्रीभिरूपनिषद्भि-र्योगमार्ग एव भगवत्प्राप्तेरेकः सुगमो मार्गोऽभिमतोऽस्ति। सर्वेषु साधनेषु मनसः स्थैर्यमत्यावश्यकमस्ति। उपनिषदां मुख्यं तात्पर्यं योगानुष्ठानपूर्वकं मुक्तिप्राप्तौ एवास्ति। मोक्षसाधनस्य नैर्वंविधः कश्चन मार्गोऽस्ति, यत्र योगाङ्गनामावश्यकता न भवति। अतो दुग्धे सर्पिरिवोपनिषत्सु योगो व्याप्तो वर्तते। एतेन निर्विवादं सिध्यति यद् योगस्योपनिषद्भिः सह घनिष्ठतमः, सम्बन्धोऽस्ति।

वर्तमाने युगे महर्षेः पतञ्जलेर्योगसूत्रादेव योगदर्शनस्यारम्भो भवति 'हिरण्यगर्भो योगस्य वक्ता नान्योऽस्ति कश्चन' इति योगियाज्ञवल्क्यवचनानुसारं हिरण्यगर्भ एव योगस्यास्ति वक्ता। भगवता पतञ्जलिना तु पूर्वतः प्रचलितस्य योगस्यानुशासनमेव कृतं, न तु नवीनतयाऽऽविर्भूतम्। अत एव "अथ योगानुशासनम्" (१।१) इति सूत्रं संगच्छते। योगसूत्रस्य समाधि-साधन-विभूति-कैवल्याभिधेषु चतुर्षु पादेषु क्रमशः ५१, ५५, ५५, ३४ संकलनया १९५ सूत्रद्वारा पूर्व पतञ्जलिना योगदर्शनस्य योगसिद्धान्तस्य यौगिकव्यवहारस्य च संक्षिप्तं प्रामाणिकं विवरणमुपन्यस्तम्। तत्र भगवता व्यासेन भाष्यं कृतं, यस्य गूढार्थं सरलया रीत्याऽवबोधयितुं वाचस्पतिमिश्रेण तत्त्ववैशारदी विज्ञानभिक्षुणा च योगवार्तिकं रचितम्। कालान्तरे योगसूत्रेऽनेका वृत्तयो विरचिताः यत्र राजमार्तण्डभिधाना भोजवृत्तिः

सुबोधव्याख्यानतयाऽत्यन्तं लोकप्रिया जाता।

विज्ञानभिक्षुणा सांख्ययोगयोः सिद्धान्तानां व्यवस्थितं प्रतिपादनं कृत्वा एते द्वे अपि दर्शने पुनरुज्जीविते, तेन सांख्यसूत्रे सांख्यप्रवचनभाष्यम् , योगसूत्रभाष्ये योगवार्त्तिकम् वेदान्तसूत्रेषु च विज्ञानाभृभाष्यं लिखित्वा सांख्ययोगयोर्वेदान्तेन सह सामञ्जस्यं स्थापयितुं महान् प्रयासो विहितः।

भारतीयं दर्शनमेकं तन्महानदमस्ति यत्रानेका विचारधारा अस्मिन् भव्ये भारतवर्षे निरन्तरं प्रवहन्ति। तत्र सम्यगवगाह्य विवेकिना मानवमणयो जन्तान्तीरियेभ्यः प्रत्यवायेभ्यो विमुक्ता परमं पदं लभन्ते, यद्धि अस्य मानवजीवनस्य वास्तविकं लक्ष्यं विद्यते।

भारतीयदर्शनस्येतिहासे दृष्टौ दीयमानायां प्रतीयते यद् भारतीयं दर्शनं निर्मलमानसै-मैहर्षिभिरनुभूतस्य सत्यस्य परिचायकं साहित्यं नास्ति। विशुद्धान्तःकरणसम्पन्नै- र्महर्षिभिर्निरन्तरं स्वाध्यायद्वारा प्राप्ताया ऋतम्भरप्रज्ञाया बलेन आत्मतत्त्वस्यानुशीलनं विधाय न केवलं प्रकृते रहस्यमुद्घाटितम् , अपितु सततमात्मचिन्तेन नैजं जीवनमपि सफलीकृतम्। एवं दर्शनशास्त्रं भारतीयमनीषिणामनु- भूतेराध्यात्मिक- प्रतिभायाः परिणामो वर्तते। दर्शनद्वाराऽऽध्यात्मिकोपलब्धेर्विकासस्य

स्फूर्तिप्रेरणा, प्रकाशनस्य ब्रह्मणोऽलौकिकतायाश्च ऊर्जस्वतां प्रतिपादनम् , उपनिषत्-महाभारत-पुराणादिषु मान्यग्रन्थेषु यत्र तत्रोपलभ्यते। अतो भारतीयदर्शनस्य मूलं स्रोतो वेदोपनिषद्-महाभारतपुराणादयः सन्तीत्यत्र नास्ति कश्चन सन्देहलेशः।

अतो महाभारतं पुराणानि च सन्ति भारतीयसंस्कृतेः समस्तानां विद्यानाञ्च आकरः। तत्र स्थाने स्थाने प्रसङ्गवशाद् दार्शनिकतत्त्वानामपि विवेचनं सरलया सरण्या प्रस्तुतमस्ति। अतः पुराणगतदार्शनिकतत्त्वानां जिज्ञासया तदनुशीलनमेव नितान्तं श्रेयस्करम्। पुराणान्यनेकैः रूपैर्भासमानस्य प्रपञ्चस्य मूले एकस्य सर्वशक्ति-सम्पन्नस्य तत्त्वस्य सत्तां स्वीकुर्वन्ति, येन समस्तमिदं विश्वं व्याप्तमस्ति। तदेव विष्णुपुराण-नारदीयपुराणादिषु विष्णुः, श्रीमद्भागवत-ब्रह्मवैवर्त-पुराणादिषु श्रीकृष्णः, वायु-कूर्म-शिव-स्कन्दपुराणादिषु शिवः, देवीभागवतादिपुराणेषु शक्तिरस्ति, भविष्यपुराणे च भगवान् भास्करो मुद्गलपुराणे च गणपतिः प्रोक्तोऽस्ति।

पुराणेषु तत्तदुपास्यदेवस्य स्वरूपविवेचनं रुचिरया भाषया वैशद्येन कृतमस्ति। ज्ञानिनां कृते स्यान्नाम भगवतो निर्गुणं स्वरूपं मान्यम् , परन्तु सामान्यमानवानां कृते तूपास्यदेवस्य सगुणं रूपमेवोपादेयं ग्रहणीयं स्पृहणीयञ्च पुराणानामभिमतमस्ति।

"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह", "अपाणिपादो जवनो गृहीता" इत्यादिनोपनिषत्सु अग्राह्यरूपेण वर्णितं निराकारं ब्रह्म पुराणेषु सगुणरूपेणाविर्भूय जीवमात्रस्य प्रत्यक्षगोचरी भवति।

यत्र वेदेषु ब्रह्म एकमद्वितीयञ्चोपदिष्टं तत्र पुराणानि विविधानां देवानां देवीनाञ्चोपासनां स्वीकृत्य समेषां गौरवं गायन्ति। विभिन्नसम्प्रदायानुसारं विभिन्ननामरूपप्रभावै वर्णयद्भि पुराणैः सर्वे सम्प्रदाया एकत्वसूत्रे निबद्धाः सन्ति।

पुराणानुसारं मूलतत्त्वस्य नाम्नो भिन्नत्वेऽपि तस्य मौलिकस्वरूपे विभेदो नास्ति। यद्यपि पुराणानि ज्ञानस्य कर्मणो भक्तेश्च वर्णनं कुर्वन्ति, तथापि तेषां कलौ सकलजनहिताय भक्तावेवास्त्याग्रहः। भक्तिर्भक्तान् दुःखबहुलात् संसाराद् प्रतिपादनं प्रायः प्रतिपुराणं समानमेवास्ति, अथापि पुराणमूर्धन्ये सर्ववेदान्तसारे श्रीमद्भागवते भक्तितत्त्वस्य सर्वाङ्गीणं विश्लेषणं प्रस्तुतमस्ति। एकादशस्कन्धे उद्धवगीतायां भगवता श्रीकृष्णेनोद्धवाय मनोरमया शैल्या भगवत्तत्त्वस्योपदेशो दत्तो विद्यते।

पुराणेषु प्रायः सूक्ष्मतया सर्वेषां दर्शनानां सिद्धान्तस्य विवेचनं कृतमस्ति, परं सांख्ययोगवेदान्तदर्शनानां विशेषतो विवेचनमुपलभ्यते। तत्रापि सांख्यदर्शनस्य प्रचुरः प्रभावो लक्ष्यते। सृष्टिरहस्यमनवधार्य सृष्टेः पारे गतिरसम्भवा। अतः सृष्टेर्विवेचन

प्रायः प्रतिपुराणं जातमस्ति। सृष्टिविषये समन्वयभावनया सर्वान् भारतीयसम्प्रदायान् एकतासूत्रे सम्बद्धुं पुराणेषु सांख्यदर्शनभित्तौ व्यवस्था कृताऽस्ति। प्रतिपुराणं यथाऽवसरं सांख्यदर्शनसिद्धान्तानां व्यवहारः कृतोऽस्ति। पुराणस्य पञ्चलक्षणे आद्यं लक्षणं सर्ग एव विद्यते। पौराणिकसृष्टौ सांख्यदर्शननिर्दिष्टायाः सृष्टेर्विशेषाश्रयणं वर्तते। पुराणानां सृष्टिप्रकरणे सांख्यीयसृष्टेर्विपुले प्रभावे सत्यापि पौराणिकी सृष्टिः सांख्यीय-सृष्टेरक्षरशोऽनुकरणं न करोति, किन्तु पौराणिकसृष्टेरस्ति किञ्चिन नैजं वैशिष्ट्यं स्वातन्त्र्यञ्च। सांख्यदर्शनेन प्रभावितायामपि पौराणिकसृष्टौ स्वीकयं स्वतन्त्रं व्यक्तित्वं विद्यते।

पौराणिकं सांख्यं निरीश्वरं सांख्यं नास्ति, किन्तु तदस्ति सेश्वरं दर्शनम्। पुराणेषु सांख्यवेदान्तयोर्न किञ्चिद् वैषम्यं विरोधो वा दृश्यते, यथा दर्शनविकासक्रमे दृश्यते। अत्र तु सांख्यवेदान्तयोर्मञ्जलं सामरस्यं विलोक्यते। प्रकृतिपुरुषयोः द्वैतप्रतिपादकं सांख्यं दर्शनम् , अद्वयब्रह्मप्रतिपादकेन वेदान्तदर्शनेन सह पौराणिकस्य दर्शनस्य मूलभित्तिं निर्मीति, पुराणानुसारं प्रकृतिपुरुषौ न स्तो भिन्नतत्त्वे, प्रत्युत तौ द्वावपि परमेश्वरप्रेरितावेव स्वीयकार्यसम्पादने समर्थौ भवतः। अनयोर्द्वयोरुपरि अंस्ति प्रेरकोऽध्यक्षो ब्रह्म, यत्प्रेरणायाऽनयोः कार्यत्वकर्तृत्वे स्फुरतः।

सांख्यदर्शने सृष्टिविकासः प्रकृतिपुरुषयोर्द्वयोः पारस्परिकसंयोगस्य परिणतं फलमस्ति। सांख्यदर्शनानुसारं द्वावप्येतौ अनादौ नित्यौ च स्वीकृतौ स्तः, किन्तु पुराणेषु इमौ विष्णो द्वे रूपे अभिमते स्तः। अनयोरुत्पत्तिर्विष्णुसत्तायामेवावधारिताऽस्ति। विष्णुपुराणं स्पष्टं निर्दिशति यद् विष्णोर्निरुपाधिकात् स्वरूपात् प्रधानपुरुषात्मकं रूपद्वयमाविर्भवति। भगवतो विष्णोः कालात्मकरूपद्वारेमौ द्वावपि सृष्टिसमये संयुक्तौ प्रलयदशायाञ्च वियुक्तौ भवतः। भगवान् विष्णुर्हि कालशक्तिद्वारैव सृष्टिप्रलयौ विधत्ते----

विष्णोः स्वरूपात् परतो हि ते द्वे रूपे प्रधानं पुरुषं च विप्र।
तस्यैव तेऽन्येन धृते वियुक्ते रूपान्तरं तद् द्विज कालसंज्ञम् ।।०।।
(१।२।२४)

अपि च प्रलयानन्तरं सर्गकाले समुपस्थिते विश्वरूपः सर्वव्यापी परमेश्वरः स्वेच्छया प्रधाने पुरुषे च प्रविश्य यथाऽक्रियाशीलोऽपि गन्धः स्वसन्निधिमात्रेण मनः क्षोभयति तथैव स स्वसन्निधिमात्रेण प्रधानं पुरुषं च सर्गाय प्रेरयति।

प्रधानपुरुषौ चापि प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास संप्राप्त सर्गकाले व्ययाव्ययौ ।।०।।
यथा सन्निधिमात्रेण गन्धः क्षोभाय जायते ।
मनसो नोपकर्तृत्वात् तथासौ परमेश्वरः ।।०।।

किञ्च कूर्मपुराणस्य पूर्वार्द्धेऽपि परमेश्वरः प्रकृतिपुरुषयोः क्षोभक उक्तेऽस्ति।

**प्रकृतिं पुरुषं चैव प्रविश्याशु महेश्वरः ।**
**क्षोभयामास योगेन परेण परमेश्वरः ।।०।।**

(४।१३)

एवं शिवपुराणस्य वायवीयसंहिताया पूवार्द्धे च परमेष्ठिन आज्ञया प्रधानात् सृष्टिक्रमः प्रतिपादितोऽस्ति।

**प्रभातायां तु शर्वर्य्यां प्रधानपुरुषावुभौ ।**
**प्रविश्य क्षोभयामास मायायोगान्महेश्वरः ।।०।।**
**ततः पुनरशेषाणां भूतानां प्रभवाव्ययात् ।**
**अव्यक्तादभवत् सृष्टिराज्ञया परमात्मनः ।।०।।**

(९।२२, २३)

एवं महाभारतस्य शान्तिपर्वण्यपि प्रकृतेः परात् सनातनात् नारायणात् पुरुषादिक्रमेण सृष्टिः प्रदर्शिताऽस्ति।

**नारायणो जगन्मूर्तिरन्तरात्मा सनातनः ।**
**प्रकृतेः परतो नित्यमिन्द्रियैरप्यगोचरः ।।**
**स सिसृक्षुः सहस्रांशादसृजत् पुरुषं प्रभुः ।।०।।**

(१८२।११)

तथा च प्रचलितसांख्यदर्शने प्रकृतिपुरुषौ अन्तिमे तत्त्वे मन्येते, परं पौराणिके सांख्यदर्शने प्रकृतिपुरुषयोरुपर्यपि परमेश्वरसत्ता स्वीक्रियते, यत्प्रेरणया सृष्टिकार्य प्रचलति। तन्मते पुषकरपलाशवन्निर्लेपस्य निरीहस्य पुरुषस्य, अचेतनायाश्च प्रकृतेः स्वयं संयोगो न सम्भवति। अतस्तयोरुपरि परमेश्वरसत्ता स्वीकार आवश्यकः। यथा सर्गादौ प्रकृतिपुरुषौ परमात्मन उत्पद्येते, तथैव तौ प्रलयदशायामपि तत्रैव प्रलीयते। तथोक्तं विष्णुपुराणे।

**प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी ।**
**पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ।।**

(६।४।३९)

श्रीमद्भागवतस्य त्रिषु स्कन्धेषु योगस्य विशेषवर्णनं विद्यते। द्वितीयस्कन्धे १-२अध्याययोः, तृतीयस्कन्धे २५-२८अध्यायेषु कपिलद्वारा स्वमात्रे देवहूत्यै सांगोपांगयोगोपदेशः, एकादशस्कन्धस्य १३अध्याये सनकादीन् प्रति हंसस्वरूपेण भगवद्द्वारा ज्ञानयोगवर्णनं १४अध्याये, भक्तेमर्हत्वं ध्यानयोगस्य विशदवर्णनं च, १५अध्याये धारणाया अणिमादिसिद्धीनां वर्णनम् , १९अध्याये भक्तियोगयमनियमादिवर्णनम् २२अध्याये तत्त्वानां संख्या प्रकृतिपुरुविवेचनप्रकारः, २४अध्याये सांख्यविधिवर्णनम् , २७-२९अध्यायेषु ज्ञानयोग-भक्तियोगाभ्यां सहाष्टाङ्गयोगस्य रुचिरं वर्णनं कृतमस्ति। एकादशस्कन्धस्य २०अध्याये च श्रीकृष्णद्वारा मानवानां

कल्याणाय त्रय एव मार्गा उपदिष्टाः सन्ति-ज्ञानयोगः, भक्तियोगः, कर्मयोगश्च।

पुराणेषु भक्तया सह योगस्यापि सामञ्जस्यमभीप्सितमस्ति। शैवपुराणेषु पाशुपतयोगस्य वैष्णवपुराणेषु भागवतयोगस्य च निरूपणं कृतमस्ति। भगवान् श्रीकृष्णो योगमाश्रित्य यावज्जीवनमत्यन्तमाश्चर्यजनकं कार्य कृतवान्। अतः एव स बहुशो योगेश्वरो प्रोक्तोऽस्ति। महर्षिणा व्यासेन प्रायः पुराणेषु भगवतः श्रीकृष्णस्य जीवनचरित्रमादितोऽन्तपर्यन्तं योगसिद्धिपूर्णमेवोपस्थापितमस्ति। वस्तुतः श्रीमद्भागवतानुसारे प्रेमपयोधौ अखिलात्मनि भगवति श्रीकृष्णे संसक्तया भक्तया सर्म कल्याणकारी कश्चन अन्यो मार्गो योगिनां ब्रह्मप्राप्तये निर्दिष्टो नास्ति।

# *द्वितीयोऽध्यायः*

**विषयः= पुराणस्य परिचयः।**

## पुराणस्य परिचयः

महर्षिणा पतञ्जलिना योगसूत्रे चित्तवृत्तिनिरोधस्योपायः 'अभ्यासवैराग्याभ्यां तन्निरोधः' (१।१२) इति सूत्रेण प्रदर्शितः, महामुनिना कपिलेनापि सूत्रमिदं व्यत्ययं कृत्वा 'अभ्यासाद्वैराग्याच्च' (३।३६) इत्युक्तम्। पतञ्जलिना तदा "द्रष्टुः स्वरूपेऽव स्थानम्" (१।३) इति सूत्रेण चित्तवृत्तिनिरोधे सति आत्मनः स्वरूपं प्रदर्शितम्। कपिलेनापि 'तन्निवृत्तावुपशान्तोपरागः स्वस्थः' (२।३४) इति लिखित्वा पूर्वोक्तमेव तत्त्वं स्पष्टीकृतम्। व्युत्थानावस्थायामपि यद् आत्मनः स्वरूपं वृत्तिसदृशं स्वीकृतं तदेव वृत्तिसारूप्यमितरत्र (योग सू० १।४) 'कुसुमवच्च मणिः' सां० सू० (२।३५) इति सूत्राभ्यां स्पष्टं भवति। पतञ्जलिना वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः। (१।५) इति सूत्रितम्। सांख्यदर्शनेऽपि अविकलं सूत्रमिदमुपलभ्यते।

कपिलेन 'सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः' (१।६१) इत्यादिसूत्रैः जगत उत्पत्त्या सह पुरुषस्य भोगापवर्गकारणमपि प्रकृतिः स्वीकृता। एतदेव पतञ्जलिनापि प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् (२।१८) इति सूत्रेण साधितम्। पतञ्जलिसिद्धान्तानुसारं कर्तृत्वभोक्तृत्वधर्मौ नात्मनः स्तः, सर्वथा शुद्धस्वरूपोऽप्यात्मा प्रवृद्धवृत्तिमनुसरन् सुखदुःखादिधर्मवान् भवति। द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः' (२।२०) अर्थात् यथा निर्मलोऽपि स्फटिकमणिः रञ्जितवस्तु साहचर्यात् रञ्जितः प्रतीयते, तथैव शुद्धमुक्तस्वभावः परिणामादिरहितः पुरुषोऽपि प्रकृतिजन्यदृश्यसम्पर्कतो द्रष्टृरूपं धत्ते। कपिलोऽपि उपरागात् कर्तृत्वं चित्ससान्निध्यात् (१।१६५) इति सूत्रेण एतदेव समर्थयति।

योगदर्शनविवेचनया प्रतीयते यत् यावदविद्याग्रन्थेः सर्वतोभावेन तिरोभावो न भवति, तावत् महानपि योगाभ्यासी रूपं परिवर्त्य नाट्यशालायां शैलूष इव संसारेऽस्मिन् जन्म गृहीत्वा जात्यायुर्भोगात्मकं भोगमनुभवत्येव 'सति मूले तद्विपाको जात्यायुर्भोगः, (२।१३) सांख्यदर्शनस्यापि अस्ति अयमेव भावः--- 'संस्कारलेशतस्तत्सिद्धिः' (३।८३) सांख्ययोगयोः एवंविधानां सिद्धान्तानां साम्यादेव गीतायां भगवता श्रीकृष्णेनोक्तम्-----

**सांख्ययोगौ पृथग् बालाः प्रवदन्ति न पण्डिताः ।**

**एकं सांख्यं च योगश्च यः पश्यति स पश्यति ।।०।।**

महाभारतस्य शान्तिपर्वण्यपि----

**नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलम् ।**

**तावुभावेकचर्यौ तावुभावनिधनौ स्मृतौ ।।०।।**

**पृथक् पृथक् प्रपश्यन्ती येऽप्यबुद्धिरता नराः ।**

**वयं तु राजन् पश्यामः एकमेव तु निश्चयात् ।।०।।**

**येदव योगाः पश्यन्ति तत्सांख्यैरपि दृश्यते ।**

**एकं सांख्यं च योगं च यः पश्यन्ति स योगवित् ।।०।।**

सांख्यदर्शनस्य योगदर्शनस्य च पृष्ठभूमिः प्रायः एकैवास्ति। उभयोरेतावानेव विशेषो यत् सांख्यदर्शनं पञ्चविंशतितत्त्वानि स्वीकरोति। योगदर्शनं तु तेभ्यः पञ्चविंशतितत्त्वेभ्योऽतिरिक्तमीश्वरमपि स्वीकृत्य षड्विंशतितत्त्वानि अङ्गीकरोति।

एतेन नैतदभ्युपगन्तव्यं यत् सांख्यमीश्वरं नाङ्गीकरोति, तेन 'ईश्वरासिद्धेः' इति सूत्रेणेश्वरासिद्धिमात्रमुपस्थापितम् , यतो हि लौकिकपुरुषार्थद्वारा ईश्वरस्यासिद्धिः, किन्तु योगजन्यालौकिकेन पुरुषार्थेन तु ईश्वरस्य सिद्धिर्भवत्येवेति तन्मतम्। सांख्यदर्शनभूमौ लौकिकपुरुषार्थप्रयोजनाभावः। अतस्तत्रेश्वरस्वीकारस्य नास्ति प्रयोजनम् तथापि सांख्यमीश्वरं मन्यते एव। योगदर्शनस्यालौकिकशक्तया सह सम्बन्धः। अतोऽत्रेश्वरोऽङ्गीकृतः। यदि सांख्यदर्शने ईश्वरो नाङ्गीकृतः स्यात्तर्हि 'ईश्वरासिद्धेः' इत्यस्य स्थाने 'ईश्वराभावात्' इत्येव सूत्रं क्रियेत। अतः सांख्यदर्शनं योगदर्शनं च

द्वयमेव दर्शनमीश्वरं स्वीकरोत्येव। उभे अपि दर्शनि आस्तिकदर्शनि एव स्त इत्यत्र न मनागपि अस्ति सन्देहलेशः।

## सांख्ययोगयोर्वैशिष्ट्यम्

सांसिद्धिकज्ञानवैराग्यैश्वर्यसम्पन्नो महामुनिः भगवान् कपिलः सांख्यस्य तदनुकूलयोगविद्याया आदिप्रवक्ता प्रबभूव। तथा चोक्तं पञ्चशिखाचार्येण 'आदिविद्वान निर्माणचित्तमधिष्ठाय कारुण्याद्भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच' इति। अत्र तन्त्रपदेन सांख्यशास्त्रं लक्ष्यते, निर्माणचित्तमिति पदेन च योगविद्या प्रतीयते, यतो हि निर्माणचित्तं समाधिजन्यं समाधिश्च योगाङ्गानुष्ठानजन्यो भवति। एतेन योगविद्यापि परमर्षिणा कपिलेन प्राप्तासीदित्यनुमीयते। किञ्च योगभाष्यं सांख्यप्रवचनभाष्यं व्यासभाष्यं चेत्युच्यते। सांख्यप्रवचनेति शब्देनेदं ज्ञायते यदिदं शास्त्रमपि सांख्यविद्याया पोषकम्। योगजनितया प्रज्ञया सांख्यीयानां पदार्थानां सांख्याकारो भवति, योगसिद्धेन कपिलेनादौ सांख्यविद्या प्रोक्ता।

अपि च सांख्यदर्शननोक्ता भूततन्मत्रादयः पदार्था योगजप्रज्ञयैव साक्षात् क्रियन्ते। अतो नित्यमिलितौ सांख्ययोगौ। महाभारतस्य शान्तिपर्वणि सांख्ययोगौ परस्परापूरकौ प्रोक्तौ। तत्र सांख्ययोगं चाधिकृत्य एकत्वेन पृथक्त्वेन च यदुच्यते तस्यायमभिप्रायः--- आत्मज्ञानस्य तत्त्वकाण्डं सांख्यं साधनाकाण्डञ्च योगः

(कृत्यकल्पतरोः मोक्षकाण्डे १६५पृष्ठे)। देवलोऽपि पञ्चविंशतितत्त्वज्ञानं सांख्यं विषयेभ्यः निवृत्याभिप्रेतेऽर्थे मनसोऽवस्थानं योगः इत्युक्तवान्। क्वचिच्च तत्त्व-निदिध्यासन परायणाः सांख्याः क्रियायोगपरायणाश्च योगा इत्यपि विवक्षा दृश्यते। रुचिनां वैचित्र्यादेवंभेदे सत्यपि न तयोः तत्त्वतः कश्चन भेदः। अत एवोक्तं भगवता श्रीकृष्णेन स्वयमेव गीतायाम्----

**सांख्ययौगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एक सांख्यं च योगं च यः पश्यति स पश्यति ।।०।।**

गीतोक्तसांख्यशब्देन संख्यया बुद्ध्या अवधारणीयतत्त्वस्य ज्ञानस्य योगशब्देन च कर्मयोगस्य संङ्केतोऽस्ति। अत्र कापिलस्य सांख्यस्य पातञ्जलस्य च योगस्य प्रकरणं नास्ति। अतो गीतायां सांख्ययोगशब्दाभ्यां ज्ञानकर्मयोगावेव गृह्येते। सांख्ययोगयोरुभयोः स्वरूपभेदोऽवर्जनीयः, किन्तूभयसाध्ये फलांशेऽभेदादुक्तमस्ति यत् बालका एवं सांख्ययोगौ पृथक् पश्यन्ति न पण्डिताः। यतो हि एकस्यैव सम्यगनुष्ठाने उभयोरपि फलं प्राप्यते। यत्थानम् (मोक्षाख्यं फलम्) ज्ञानेन प्राप्यते तदेव निष्कामकर्मयोगेनापि अवाप्यते। यद्यपि यागादानादिकं कर्म फलासक्तया अंहङ्कारबुद्ध्या चानुष्ठितं ज्ञानलभ्यं फलं दातुं न शक्नोति, तथापि निष्कामकर्म-बुद्ध्या भगवदर्पणबुद्ध्या वा अनुष्ठीयमानं सत् तदेव फलं सुलभं भवति।

योगशब्दो मनोनिरोधस्य वाचकोऽस्ति यतो मनोनिरोधमन्तरा ज्ञानं भक्तिः इत्यादि सत्कर्म च सर्वं व्यर्थमस्ति। अत एव परमपुरुषार्थप्रतिपादकेषु उपनिषदादि-सद्ग्रन्थेषु योगशब्दस्य प्रयोग उभयोरेवार्थयोः सामञ्जस्येन भवति। मुक्तिप्राप्तिर्यथा ज्ञानेन भक्तया वा भवति, तथैव योगेनापिसं जायते इत्यत्र नास्ति ईषदपि सन्देहावसरः। तथा च ज्ञानं पराभक्ति योगश्चेति त्रितयं भगवत्प्राप्तेः चरमं साधनमस्ति।

पुरा सांख्योगविद्या अध्यात्मपदवाच्यासीत्। एत एवोक्तं कठोपनिषदि अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति (१।२।१२)

किञ्च विद्यामेतां योगविधिञ्च कृत्स्नम् (२।६।१८) इत्यत्र सांख्यं विद्यापदे नोक्तम्।

वस्तुतः सगुणं निर्गुणं चात्मज्ञानं तत्प्राप्युपायभूतं चित्तैकाग्र्यादिकं च सांख्ययोगविद्याया मुख्यः प्रतिपाद्यो विषयः। महाभारते (१२।३१५।१०) याज्ञवल्क्य-कृताध्यात्मज्ञानं विवरणमपि सांख्ययोगानुसारमेवोपस्थापितं वर्तते। मनुस्मृतौ निःश्रेयसदृष्ट्या आत्मज्ञानं च सर्वोत्कृष्टत्वेन सिद्धान्तितं भगवता मनुना 'सर्वेषामेव चैतेषामात्मज्ञानं परं स्मृतम्' (११।८५) भगवान् याज्ञवल्क्योऽपि याज्ञवल्क्यस्मृतौ-'अयं हि परमो धर्मो यद्योगेनात्मदर्शनम्' (१।८) इत्युक्तवान्।

अत एव च कठोपनिषदि अव्यक्तादपि परः पुरुषः आत्मपदवाच्यः परत्वेन उत्कृष्टत्वेन चोत्प्रेक्षितः--- 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परागतिः' (१।३।११) एत एव चिदचिद्विषयकं सर्वं तात्त्विकं समाधिजन्यञ्च ज्ञानमात्मपदवाचकमिति वक्तुं शक्यते। अत एव च 'शुद्धात्मतत्त्वविज्ञानं सांख्यमित्याभिधीयते' इत्यादिवचनैः आत्मज्ञानापरपर्यायभूता सांख्ययोगविद्येति निर्विवादं सिध्यति।

सांख्ययोगविद्या हि आध्यात्मिकाधिभौतिकाधिदैविकत्रिविधदुःखनिवर्तन-क्षमेति विभाव्य कपिल-पतञ्जलिभ्यां महर्षिभ्यां सांख्ययोगदर्शनयोः महान् प्रयासो विहितः। तत्र दुःख-तत्कारण-तन्निवृत्त्युपायादिविषया युक्तितः सम्यक् पर्यालोचिताः सन्ति। न खलु कश्चिद् दुःखकारणानि अविज्ञाय तन्निराकरणे समर्थो भवितुमर्हतीति दुःख कारणतन्निवृत्तिहेतुकं कार्यकारणात्मकं विज्ञानमिह दर्शने आन्वीक्षिकीपद्धत्या एव विवेचितमस्ति। प्रमेयज्ञानं च प्रयोगपरीक्षणक्षमं बलं बिना नार्थसाधकमिति हेतोः साधनबलमपि योगे विचारितम्। अत एव महाभारते 'नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलम्' (१२।३१६।२) इत्युक्तम्। अत एव च भगवत्पूज्यपादैः श्रीस्वामिशङ्कराचार्यैरपि शारीरकभाष्ये (२।१।३) योगशास्त्रेऽपि, अथ तत्त्वदर्शनोपायो योगः, इति सम्यग्दर्शनाभ्युपायत्वेनैव योगोऽङ्गीक्रियते इत्युक्तम्। किञ्चाग्रे सांख्ययोगौ हि परमपुरुषार्थसाधकत्वेन लोके प्रख्यातौ शिष्टैश्च परिगृहीतौ लिङ्गेन च श्रौतेनोपबृंहितौ

'तत्कारणं सांख्ययोगाभिपन्नं ज्ञात्वा देवं मुच्यते सर्वपाशैः' (श्वे०उ० ६।१६) इति प्रोक्तम्।

यथा शारीरिकामयविध्वंशी आयुर्वेदः व्यूहचतुष्टयेन रोगनाशं विधत्ते तथैव, भवरोगहरं सांख्ययोगमपि चतुर्व्यूहैः जीवानां भवरोगं शमयति। अत एव सांख्ययोगशास्त्रं चतुर्व्यूहमभ्युपगतं योगदर्शनभाष्ये भगवता व्यासेन 'यथा चिकित्साशास्त्रं चतुर्व्यूहं रोगो रोगहेतुरारोग्यं भेषजमिति, एवमिदमपि शास्त्रं चतुर्व्यूहमेव। तद्यथा--- संसारः, संसारहेतुः, मोक्षः, मोक्षोपाय इति। तत्र दुःखबहुलः संसारो हेयः, प्रधानपुरुषयोः संयोगो हेयहेतुः, तत्संयोगस्यात्यन्तिकी निवृत्तिर्हानम् , हानोपायश्च सम्यग् दर्शनम्। तत्रैव तत्त्ववैशारद्यां वाचस्पतिमिश्रोऽपि दुःखं च हेयं प्रज्ञावताम्। न च तन्निदानं हानमन्तरेण तद्धेयं भवितुमर्हति तचापरिज्ञातं निदानं शक्यं हातुम्। अत एवच सांख्येति नाम सम्यग्दर्शनात्मकत्वात् प्रचलति।

योगबलेन चेतसो निरोधे सर्वदुःखानामभावे सर्वेश्वरस्य साक्षात्कारो जायते। स च निरोधः तत्त्वज्ञानमन्तरा न शाश्वतिको भवतीति नान्तरीयकं खलु योगस्य सांख्यम्। अवास्तवं तत्त्वज्ञानं न खलु दुःखनाशायालम्। योगसमाधिना हि अलौकिक शक्तिसम्पादनं सुकरं भवति। वास्तविकतत्त्वज्ञानस्याधिगमः सांख्ययोगमन्तरा न कर्तुं शक्यमतो मोक्षसाधनभूता अध्यात्मविद्या अनादिकालत एव प्रचलित। अतः

सांख्ये तु मोक्षदर्शनमित्युक्तं महाभारते (१२।३००।५) अतः आध्यात्मिकतत्त्व-विवेचनावसरप्रसंगे सम्यग्दर्शनसांख्यमिति कृत्वा ऋषिसमाजे प्रवादः प्रचलितः। अतः परमर्षिणा कपिलेनादौ आध्यात्मिकं तत्त्वज्ञानं सांख्यं युक्तिभिः प्रवर्तितम्। पतञ्जलिप्रभृतिभिस्तु अनुशासनमेव कृतम् न तु पुनरपूर्वस्य शास्त्रस्य सर्जनं विहितम्।

सांख्ययोगीयाः सर्वे पदार्थाः प्रायः सर्वत्र एव सिद्धा भवन्ति। न्यायोप-जीवित्वाच्च नात्र प्रतिपदं शब्दप्रमाणस्यापेक्षा वर्तते। न च प्रमेयगताः सर्वे विशेषाः शब्दानुमानाभ्यामेवावगन्तुं शक्याः। अतो भूतादीनां प्रत्यक्षीकरणमावश्यकम्। प्रत्यक्षत उपलब्धेऽर्थे जिज्ञासा निवर्तते। अत एव सांख्ययोगनये प्रत्यक्षानुमानागमा इति त्रीणि एव प्रमाणानि स्वीकृतानि। तथा चोक्तं योगसूत्रे भगवता पतञ्जलिना 'प्रत्यक्षानुमानागमाः प्रमाणानि' (१।३)।

मोक्षोपायभूतानि योगाङ्गानि तदनुष्ठानज्ञानार्थं चित्तादीनामविधानज्ञानं कर्मादीनां च विज्ञानम् अभ्यासवैराग्यस्वरूपं चेत्यादयो योगविद्यायाः असाधारणविषयाः ज्ञानदृशा च सांख्यविद्यायाः प्रधानादयः पदार्थाः सांख्ययोगदर्शनयोः सम्यग् विवेचिताः।

## सांख्ययोगदर्शनस्योपयोगिता

वैज्ञानिका इव योगिनोऽपि समाजस्य उन्नायकाः सन्ति। यथा वैज्ञानिकाः स्वप्रयोगशालायां तन्मयतापूर्वकं विविधप्रयोगपरीक्षणानन्तरं समाजस्य समक्षे विविधान् कल्याणकारिणआविष्कारानुपस्थापयन्ति, तथैव योगिनोऽपि स्वप्रयोगशालायां स्वस्थान् दृढाङ्गान् वलिष्ठान् कार्यकुशलान् सर्वकलाप्रवीणान् नागरिकान् निर्माय राष्ट्रस्य समाजस्य च महान्तमुपकारं कुर्वन्ति। वैज्ञानिकानां प्रयोगाः कदाचिदसफला समाजस्य राष्ट्रस्य च हानिकारका अपि भवितुमर्हन्ति, परं योगिनां निर्माणकार्यं सर्वदा सत्यस्य शिवस्य सुन्दरस्य च प्रतिष्ठापकमेव भवति।

योगिनां वैज्ञानिकानाञ्च चिन्तनप्रवाहमार्गः कामुं भिन्नो भवेत् , किन्तु द्वावपि प्रकृतेः तलस्पर्शिविवेचनं विधातुं प्रयतेते। द्वाभ्यामपि जगतः सूक्ष्माणां स्थितीनां स्पर्शं कर्तुं प्रयत्यते। अन्तरं तयोः केवलमेतावदेव भवति यद् वैज्ञानिकाः केवलं जगतः स्थूलशक्तिषु एवाधिकारं कृत्वा सन्तोषमनुभवन्ति, किन्तु योगिनो नैतावता तुष्यन्ति, प्रत्युत तेषां योगचिन्तनधारा इतोऽप्यग्रे प्रवहति। योगिनः समाधिस्थाः सन्तः विश्ववारिधै विकीर्णानि सिद्धिरत्नानि संग्रहीतुं प्रभवन्ति। योगिनामन्तर्दृष्टिः अत्यन्तं सूक्ष्मा भवति प्रयोगश्च तेषां हेतुलक्ष्यी भवति। योगिनः स्वयं साधनासम्पादित-सिद्धिसमृद्धिं सर्वेषां समक्षं समुपस्थापयितुं समर्था भवन्ति। अतो योगिनां कार्यकौशलं धन्यं यशस्यं वन्द्यं सर्वथा स्पृहणीयं राष्ट्रनिर्माणोपयोगि

विश्वसहयोगि संसारस्य कल्याणकारिचास्ति।

विशालं, वैभवम् , विपुला विद्या, सुरम्यं स्थानम् , अपरिमितं साधनम् समृद्धं साहित्यम् , सुन्दरं शरीरम् , कुशाग्रा बुद्धिः, उर्वरितं मस्तिष्कम् , सूक्ष्मेक्षिकया विवेचनसरणिः सर्वमेतत् स्वास्थ्यं बिना निष्फलं भवति। अतोऽनायासेन सम्पादितेन योगाभ्यासेन शरीरस्य स्वास्थ्यलाभायावश्यं प्रयत्नो विधेयः। योगाभ्यासार्थं न बाह्यस्य धनस्यावश्यकता भवति, नापि विशालस्य भवनस्य अपेक्षा जायते, न चाधिकस्यैश्वर्यस्याकाङ्क्षास्ति, किन्तु प्रतिदिनं प्रातः सायं यथासम्भवं स्वभवने पवित्रे एव वातावरणे किञ्चित् समयोऽपेक्षते। प्रायः शरीरस्य बौद्धिकस्य च स्वास्थ्यस्य लाभाय शरीरं सुदृढं बलिष्टमारोग्यं मनोहरं च विधातुं योगदर्शनस्य साधनमवश्यमनुष्ठेयम्।

योगः शरीरमारोग्यं बलिष्ठं च कुरुते, मानसं निर्मलं पवित्रं च सम्पादयति। योगानुसारं प्राकृतिकं जीवनमेव दैनिकजीवनस्य क्रमोऽस्ति। योगिनो वनेषु पुष्प-वाटिकासु लताकुञ्जेषु गोमयादिलिप्तेषु पवित्रतमेषु गृहेषु नदी-कूप-सरसां विशुद्ध-जलवायुसेवनेन दुग्ध-कन्द-मूलफलादीनां सदुपयोगेन सन्मार्गानुसरणेन च सूर्यकिरणैः जीवनतत्त्वग्रहणपूर्वकमनायासेन मानसिकं नैरुज्यमुपलभ्य प्राकृतिकं जीवनं यापयन्ति।

शरीरं व्यवहार्थं परमार्थं च मुख्यं साधनमस्ति। एतद्द्वारैवाभीष्टस्य वस्तुनः उपलब्धिसम्भवोऽस्ति। शुद्धा नाड्यः, विशुद्धं रुधिरम् , बलवान् मज्जातन्तुः, ससक्तः क्रियातन्तुः, निर्मलं ज्ञानम् , विशुद्धं वीर्यं च मानवशरीरस्वास्थ्यलाभे भवन्ति कारणानि। एतदर्थं योगाभ्यासमन्तरा नास्ति किञ्चिदन्याद्वास्तविकमत्यन्त-मुपयोगि च साधनम्। ब्राह्यसौन्दर्यापेक्षया आन्तरिकस्य सौन्दर्यस्य भवति महन्महत्त्वम्। नियमतो योगसाधनेन आन्तरिकं सौन्दर्यं वर्द्धते। अतो योगिनः ब्राह्यसौन्दर्यसंवर्द्ध-नापेक्षया आभ्यन्तरस्य सौन्दर्यस्य परमोपयोगित्वमनुभूयानुशीलयन्ति योगाभ्यासम्। यथा भगवतो मूर्तौ मन्दिरे च सौन्दर्यं रम्यत्वं सुदृढत्वं स्वच्छत्वं चापेक्षितमस्ति, तथैव शरीरमपि आत्मपरमात्मनोः मन्दिरं मत्वा तस्य निर्मलतासम्पादनाय प्रयतन्तेऽर्निशं विवेकिनो योगिनः। अत एवोक्तं पूज्यपादभगवच्छङ्कराचार्यैः सदासारस्तोत्रे----

**देहो देवालयः प्रोक्तो देही देवो निरञ्जनः ।**
**अर्चितं सहभावेन स्वानुभूत्या विराजते ।।०।।**

यदि समुचितेन रूपेण परमार्थसाधनं क्रियते, तर्हि आत्मशरीरे एव भगवतो निरञ्जनस्यावश्यं दर्शनं संभवेत्। यथा स्वच्छे मलरहिते दर्पणे शरीरं स्पष्टं प्रतिबिम्बितं भवति, तथैव शरीरारोग्यतया प्रसन्ने मनसि सर्वाः क्रियाः सफला भवन्ति।

अपि च सनन्कुमार-नारद-पराशर-याज्ञवल्क्य-वसिष्ठ-शुक्रप्रभृतयो योगाभ्यासेनैव सिद्धिं गताः। श्रीस्वामिनः शङ्कराचार्यस्याकाशमार्गेण मण्डनमिश्रगृहे गमनम् , मृतस्य अमरोः राज्ञः शरीरे प्रवेशश्च योगसाधनस्यैवास्ति अद्भुतं कर्म। अद्यत्वेऽपि केचन महायोगिनः क्वचिदद्भुतमाश्चर्यकरं च कार्यमुपस्थापयन्ति। एत एवोक्तं मतङ्गेन ऋषिणा----

**अग्निष्टोमादिकान् सर्वान् विहाय द्विजसत्तम ।**
**योगाभ्यासरतः शान्तः परं ब्रह्माधिगच्छति ।।०।।**

साधकः योगशास्त्रोक्तसाधनानुष्ठानपूर्वकं रहसि स्थितः प्रयतमानो मनसा आत्मनोऽन्तःकरणे परमात्मानं साक्षात्कर्तुं प्रभवति। योगसाधनद्वारा विषयेभ्य इन्द्रियाणि प्रत्याहृत्य मनोऽतिनिर्मलं विधाय योगी शरीराभ्यन्तर एव ज्ञानगम्यमात्मानं साक्षात्कृत्य कृतकृत्यो भवति। तदुक्तं श्रीरामं प्रति महर्षिणावसिष्ठेन। योगवासिष्ठेऽपि-----

**दुःसहा राम ! संसारविषवेगा विषूचिका ।**
**योगगारुडमन्त्रेण पवनेनोपशाम्यति ।।०।।**

अयं संसाररूपो विषविषूचिकावेगो महान् दुःसहोऽस्ति, योगरूपगरुडस्य मन्त्रेणैव शाम्यति, नान्यथा। गरुडपुराणेऽपि भगवता व्यासेन योगः परममौषधं प्रोक्तमस्ति-----

**भवतापेन तप्तानां योगो हि परमौषधन् ।।०।।**

विवेकचूणामणौ भगवान् शङ्कराचार्योऽपि प्रोक्तवान् यद् ये पुरुषाः घटपटादिबाह्य प्रपञ्चं श्रोत्रादीन्द्रियं चितमहमित्याभ्यन्तरं च चिदात्मनि साक्षिणि प्रविलाप्य समाधिस्थो भवति त एव जन्ममरणात्मकैर्बन्धनैर्विमुच्यन्ते।

एवं योगवीजे पार्वतीमहादेवसंवादे भगवती पार्वती भगवन्तं सदाशिवम प्राक्षीत्-- भगवन् ! यदि केवलेन ज्ञनेन मोक्षप्राप्तिः सम्भवति, तर्हि 'योग एव मोक्षदः' इति ज्ञानिनां मतं कथंकारं संगच्छते ? तदुत्तरे स एवमभाणीद् यद् देविः! यद्यपि ज्ञानेनैव मोक्षो भवति, नान्येन साधनेनेति ज्ञानिनां कथनं सत्यमस्ति, तथापि खड्गेनैव शत्रुपराजयो भवीतत्यस्य सत्यत्वेऽपि किं युद्धेन वीर्येण बिना शत्रुपराजयः सम्भवति। तथैव योगं बिना केवलेन ज्ञानेन मोक्षप्राप्तिः न सम्भवति। किञ्च, ज्ञाननिष्ठो विरक्तो धर्मज्ञो जितेन्द्रियोऽपि देवो योगेन बिना मोक्षं न लभते।

योगतत्त्वोपनिषद्यपि----

**योगो हि ज्ञानहीनस्तु न क्षमो मोक्षकर्मणि ।**
**तस्माद् ज्ञानं च योगं च मुमुक्षुर्दृढमभ्यसेत् ।।०।।**[१]

---

१- महाभारत शान्तिपर्व १२।३४९।६४।

## सांख्यदर्शनस्यावश्यकता

भारतीयसंस्कृतौ सांख्यदर्शनस्यातयुन्नतं स्थानमासीत्। देशस्योदात्तविचारवन्तो विद्वांसो दर्शनपद्धत्या विचारयन्ति स्म। महाभारते शान्तिपर्वाणि भगवता व्यासेन कथितमस्ति यत् लोके यत् किञ्चिद् ज्ञानं दृश्यते तत्सर्वं सांख्यसम्बद्धमेवास्ति-

**ज्ञानं च लोके यदिहास्ति किञ्चित् सांख्यागतं तच्च महामहात्मन् ।**[1]

वस्तुतो महाभारते दार्शनिकविचारस्य या पृष्ठभूमिरुपलभ्यते, तत्र सांख्यदर्शनस्य महत्त्वपूर्ण स्थानमस्ति। तत्र पञ्चशिखधर्मध्वज--- जनकसंवादे, सुलभाजनकसंवादे, वसिष्ठकरालजनकसंवादे याज्ञवल्क्यदैवरातिजदेकसंवादे च सांख्यदर्शनस्य विचाराणां रुचिरया काव्यमयरोचकपद्धत्या उल्लेखः कृतोऽस्ति। साख्यदर्शनस्य प्रभावो गीताया प्रतिपादितदार्शनिकपृष्ठभूमौ पर्याप्तरूपेण वर्तते।

वस्तुतः सांख्यदर्शनं प्रागत्यन्तं लोकप्रियमासीत्। भारतीयजीवने दर्शन-स्यातिशयमुपयोगिता पूर्वत एवास्ते। भारतीयसंस्कृतेः इतिहासे भारतीयदर्शने-तिहासस्य विकसितं रूपमस्ति। प्राक्कालत एव विचाराणां नवा नवा प्रवाहाः

---

१- महाभारत शान्तिपर्व १२।३०१।१०९

चिन्तनशीलानां भारतीयानां बुद्धिषु निरन्तरमाविर्भवन्तिस्म। विचाराणां रसमयो निर्झर एव दर्शनमासीत्। तत्सहस्रवर्षपर्यन्तं भारतस्यानेकेषु भागेषु प्रसरणशीलामासीत्।

कर्मसु दार्शनिकपृष्ठभूमिर्भवति। कस्मिंश्चित् समये वेदानां प्रणववादो भारतीयजीवनस्य मूलप्रेरकसिद्धान्त आसीत्। कालान्तरे उपनिषदां ब्रह्मवादो भारतीयविचारणां केन्द्रं जातम् , येन भारतीयदर्शनमध्यात्मवादेन सह सम्बद्धम्। अतिशयं प्रवर्द्धमानस्याध्यात्मवादस्य प्रतिक्रियास्वरूपं कियतामनुशीलनपरायणानां मनः सु अध्यात्मापेक्षया स्थूले लक्ष्ये प्रत्यक्षे चानुभवे प्रतीयमानाया प्रकृतौ आश्रितानां विचाराणामाविर्भावो जातः। सम्भावये लोकायतिकानां प्रत्यक्षवादोऽस्यैवान्दोलनस्य सूचकोऽस्ति।

एवमेषामभिनवविचाराणामाविर्भावसमये एव सांख्यदर्शनेनातिसरलतया प्रकृतौ संभाव्यमानायाः सृष्टेः व्याख्या प्रस्तुता। प्रकृतौ जीवने च दृश्यमानस्य वैषम्यस्य त्रिगुणात्मकसिद्धान्तद्वारा बुद्धिगम्यमतिसुन्दरं समाधानमुपस्थापितम्।

प्रायो गणनार्थकसंख्याशब्देन सांख्यशब्दस्य व्युत्पत्तिः क्रियते। केचन बुद्धिपूर्वकविचारार्थकचक्षिङः ख्यादेशं कृत्वा संख्याशब्दस्य व्युत्पत्तिं मन्यन्ते। महाभारते ज्ञानवाचिनः संख्याशब्दस्य संकेत उपलभ्यते----

**संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते ।**

**तत्त्वानि च चतुर्विंशत्तेन सांख्याः प्रकीर्तिताः ।।०।।**

अपि च

**पञ्चविंशतितत्त्वानि प्रवदन्ति मनीषिणः ।।०।।**

अर्थाद् ये प्रकृतिं विवेचयन्ति चतुर्विंशतितत्त्वानि गणयन्ति संख्यायाः ज्ञानस्य च उपदेशं ददति ते सांख्यशास्त्रप्रवर्तका कथ्यन्ते। सांख्ये सर्वदर्शनापेक्षया इदमेव वैशिष्ट्यमस्ति यदत्र स्थूलजगतः त्रिगुणात्मकव्यवहारस्य अध्यात्मप्रवृत्तेश्च बुद्धिपूर्वकं विवेचनं समन्वयश्च कृतोऽस्ति। एत एवेदं दर्शनं सर्वतो महिमशालि लोकोपकारि सर्वप्रियञ्च प्रसिद्धमस्ति।

सांख्यसम्बन्धिनः इतिहासस्य विवेचनं प्राचीनभारतीयदार्शनिकविचाराणां साङ्गोपाङ्गेन इतिहासेन सह सम्बद्धमस्ति। बहुभिर्विद्वद्भिर्विवेचनात्मकप्रणाल्या सांख्यदर्शननेतिहासविकासस्य प्रधानसमस्यासु प्रकाश उपस्थापितः। यत्र तिथिक्रमस्या-भावोऽस्ति तत्र विचाराणां पौर्वापर्यस्याधार एव ऐतिहासिकानामेकमात्रं साधनमस्ति। सांख्यशास्त्रस्य महत्यमाचार्यपरम्परायां भगवान् कपिलोऽस्य शास्त्रस्य मूलप्रवर्तकरूपेण सर्वेभ्य उन्नतं स्थानं बिभर्ति। अनया दृष्ट्या नास्ति काचन संशीतिः। न केवलं प्राचीनतया, नापि भारतीयवाङ्मयेऽनुस्यूतप्रभावेण, किन्तु गूढया आध्यात्मिकदृष्ट्या एवास्य विशिष्टं महत्त्वं दरीदृश्यते।

सांख्यशब्दस्य वैदिकसंहितास्वनुपलम्भेऽपि सांख्यस्य विचारधाराया मूलम् ऋग्वेदे "द्वासुपर्णा सयुजा सखायौ" (१।१६४।२०) इति मन्त्रे स्पष्टं दृश्यते। सांख्यप्रवर्तकस्य भगवतः कपिलस्रू श्वेताश्वरोपनिषदि "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानेर्विभर्ति" (४।२) इति वर्णनं स्पष्टत एव सांख्यदर्शनस्य प्राचीनतां साधयति। एतदतिरिक्तमुपनिषद्भिः सह पुराणेतिहासयोः धर्मशास्त्रे आयुर्वेदादिसाहित्येषु सांख्यस्य यावान् प्रचुरः प्रभावो विलोक्यते, न तावान् अन्यस्य कस्यापि दर्शनस्य। एवमर्थशास्त्रे न्यायवैशेषिकादिदर्शनानामुल्लेखमकृत्वा 'सांख्यं योगो लोकायतिकं चेत्यान्वीक्षिकी' (१।२) इत्यत्र सांख्यवर्णनेन तस्यापेक्षिकप्राचीनता सिध्यति।

वर्तमाने काले उपलब्धं सांख्यदर्शनस्य साहित्यं यद्यपि विस्तृतं नास्ति तथापीदं निर्विवादमस्ति यद् प्राचीने कालेऽस्य बृहत्साहित्यमासीत्। दौर्भाग्याद्-वैदेशिकानामाक्रमणपरिणामस्वरूपमिदानीं तन्नष्टप्रायमस्ति। अद्यत्वे यदपि साहित्यमुपलभ्यते तत्रापि गभीरदर्शनदृशा अनुशीलनपरा विरला एव विद्वांसो दृश्यन्ते।

इह खलु जगतीतले केचन रोगग्रस्ताः, कतिपये दारिद्र यार्दिताः, केचित्पुत्र चिन्तातुराः, केऽपि दारपरिग्रहणपरायणाः, कियन्तो राजदुःखदुःखिताः, परे प्रजापालन पीडिताः, इतरे मानवहानिहेयजन्मानः, अन्ये राज्यदण्डव्यथितहृदयाः, केचन

काणाः, केऽपि पंगवः, केचित् खञ्जाः, कतिपये कुब्जाः, केचन दीर्वाः, अपरे मूकाः, परे वावदूकाः, इतरे गृहीाविखिन्नचेतसः, कियन्तो रिपुकृन्नामापन्निमग्नाः। एवमनुदिनं विविधां दुःखसन्ततिं भुञ्जाना विलोक्यन्ते प्राणिनः।

न चैवं निश्चयो विश्वासो वा भवति यदग्रे कियत्कालानन्तरमापद्भ्य एताभ्यो विमुक्ता भविष्यन्ति मानवाः। यादृशैः प्राक्तनकर्मभिरत्रेदानीं दुःखोपलब्धिः तथा तादृशैरेवाधुनिकैः कर्मभिः भाविन्यपि जन्मनि अवश्यं दुःखावाप्तिरिति समुचितमनुमानम् , उचिता विचारणा, अतथ्या चेयं सम्भावना। अत एवोक्तं भरद्वाज संहितायाम्-----

**कुर्वते कर्मभोगााय कर्म कर्तुं च भुञ्जते ।**
**नद्याः कीटा इवावार्तादावर्तान्तरमाशु ते ।।०।।**
**व्रजन्तो जन्मनो जन्म लभन्ते नैव निर्वृतिम् ।**
**यथा तृणजलौकेयं देही कर्मगतिं गतः ।।०।।**

न चात्र पुण्यकर्मभिः निरन्तरं सुखव्याप्तिरिति कल्पयितुं शक्यम्। आसंसारं त्रिविधदुःखभिघातस्यावश्यं भावित्वात् पुण्यकर्मभिः सुखोपलब्धावपि तत्फलभोगान्तरं दुःखप्राप्तेरनिवार्यत्वाच्च। न च कस्मैचिदपि दुःखमिष्टम् आपत्सु सहा विपच्चापरिहणीया भवति। एवंस्थितौ अस्माकं पूर्वजैः भारतीयैर्महर्षिभिः साधु

परीक्षितं सम्यक् प्रतिपादितं सुनिश्चितं सुसिद्धान्तितं चात्मज्ञानमेवात्यान्तिकदुःखोपघाताय समर्थं भवति। एत एवोक्तमीश्वरकृष्णेन सांख्यकारिकायाम्----

**दुःखत्रयाभिघाताज्जिज्ञासा तदभिघातके हेतौ ।**
**दृष्टे सा पार्थ्या चेन्नैकान्तात्यन्ततोऽभावात् ।।०।।**

न चात्मज्ञानं बिना आत्यन्तिकी ऐकान्तिकी च दुःखनिवृत्तिः सुखावाप्तिश्च सम्भवति। अत एव भगवती श्रुतिः स्पष्टमुदघोषयति--- "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय, ऋते ज्ञानान्न मुक्तिः" सर्वमिदं मानवयोनावेव सम्भवति, यतस्तदितरयोनीनां भोगयोनित्वमेवास्ति। अतस्तत्र नास्ति कर्मणामधिकारव्यवस्था। विधातुः सृष्टेः वैचित्र्यात् मानव एव केवलमीदृशोऽस्ति यो विचिन्त्य स्वशुभाशुभे विमोक्तुमर्हत्यात्मानं मृत्योः पाशात्। अत एव सृष्टिनिर्माणावसरे ब्रह्मदेवस्य मनुष्यनिर्माणादेव सन्तोषोऽजायत। यथोक्तं श्रीमद्भागवते-----

**सृष्ट्वा पुराणि विविधान्यजयात्मशक्त्या**
**नानासरीसृपपशून् खगदंशमत्स्यान् ।**
**तैस्तैरतुष्टहृदयः पुरुषं विधाय**
**ब्रह्मावलोकधिषणं मुदमाप देवः ।।०।।**

---

१- श्रीमद्भागवत ।११।९।२८।

अत एव सम्प्राप्य मानवशरीरमवश्यं विज्ञेयमात्मतत्त्वम्। अयमेव परम-पुरुषार्थः, उत्कृष्टा सिद्धिः, श्रेष्ठा च सम्पदस्ति। अनेनैव मानवजन्मनः साफल्यम् एतनैव कृतार्थोऽयं जनः, अमुनैव वसुन्धरा वस्तुतो वसुन्धरा। अत एवोपनिषदि "इह चेदवेदीदथ सत्यमस्ति नो चेदवेदीन्महती विनष्टिः" इत्युक्तम्।

भगवती गीतापि वक्ति---

**"ततः पदं मत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः" ।**

पूज्यपादाः श्रीशंकराचार्या अपि----

**लब्ध्वा कथञ्चिन्नरजन्म दुर्लभं**
**तत्रापि पुंस्त्वं श्रुतिपारदर्शनम् ।**
**यस्त्वात्ममुक्तौ न यतेत मूढधीः**
**स आत्महा स्वं विनिहन्त्यसद्ग्रहात् ।।०।।**

श्रीमद्भागवते तु योऽतिदुर्लभं मानवशरीरं प्राप्यापि स्वोद्धाराय न प्रयतते, स आत्मवञ्चकआत्महा कथितोऽस्ति----

**गुरुर्न स स्यात् स्वजनो न स स्यात्**
**पिता न स स्याद् जननी न सा स्यात् ।**
**दैवं न तत् स्याद् न पतिश्च स स्याद्**
**न मोचयेद् यः समुपेतमृत्युम् ।।०।।**

एतत्सर्वं लक्ष्यीकृत्यैव भगवत्या श्रुत्या स्पष्टं समुद्घोषितम्----

**आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च ।**[1]

अतः आत्मज्ञानसम्पादनं प्रत्येकमानवस्य प्रधानमस्ति कर्तव्यम्। विश्वं दुःखमूलं मन्यमानैर्भारतीयैर्महर्षिभिः आध्यात्मिकं ज्ञानमेव सुखं सुखमूलं वेति निश्चितम्।

विषयेष्वासक्तचेतसां सचेतसां जीवात्मा असंयतत्त्वाद् बन्धाय कल्पते, किन्तु योगसमाधिना विवेकैश्चविमलीकृतात्मा स एव पुरुषपुङ्गवः सर्वोपद्रवशून्यं सकलशास्त्रैर्गम्यं निर्मलं कैवल्यं लभते----

**असंयतः कुबुद्धीनामात्मा बन्धाय कल्पते ।**
**श्रीमद्भिः संयतः सोऽपि पदं दद्यादनामयम् ।।०।।**[2]

सर्वोपाधिविनिर्मुक्तः आत्मैव सर्वाश्रयवासिभिः यत्नपूर्वकं जिज्ञास्यः। 'ऋते ज्ञानान्न मुक्तिः'' इति सिद्धान्ताद् आत्मज्ञानेनैव मुक्तिः सम्भवति, नान्यथा। तच्चात्मज्ञानं स्वल्पायासेन योगाभ्यासेनैव भवितुमर्हति तथाचोक्तम्----

**आत्मज्ञानेन मुक्तिः स्यात् तच्च योगादृते नहि ।।**

---

१- बृहदारण्यकोपनिषद् २।४।५।

२- स्कन्दपुराणे ४।४१।३८।

महाभारतस्याश्वमेधिकपर्वणि प्रोक्तं यद् यः चतुर्विंशतितत्त्वानामुत्पत्तिविनाशौ सम्यक् जानाति सर्वप्राणिनां धीरः स मोहं नाधिगच्छति, यश्च सर्वाणि तत्त्वानि समस्तान् गुणान् अखिला देवाताश्च यथार्थतो जानाति तस्य पापानि विधूयन्ते, सर्वबन्धनविमुक्तः सः अमलान् लोकान् लब्ध्वा दिव्यानि सुखानि अनुभवति।[१] आत्मपरायणस्य तत्त्वज्ञास्य मुक्तौ नास्ति कश्चित् सन्देहः।[२] यश्च सर्वभूतेषु प्रधानां प्रकृति तस्या गुणान् तत्त्वानि च सम्यम् ज्ञात्वा ममताहंकाररहितो भवति सोऽवश्यं मुच्यते।[३] निश्चितदर्शिनो वृद्धा ज्ञानमेव परमं कल्याणसाधनमामनन्ति। अतो मनुष्यः शुद्धज्ञानद्वारेव सर्वेभ्यः पापेभ्यो विमुक्तौ भवति, नान्यथा।[४] यथा पद्मिनीपत्रसंस्थितो लोलो जलबिन्दु र्न संसक्तो भवति, तथैव विद्वान् सर्वैर्गुणैः संसक्तोऽपि न क्वचन लिप्यते। यथा दीपकमादाय मानवोऽन्धे तमसि निर्भयं गच्छति, तथैव साधको ज्ञानदीपप्रकाशेन सन्मार्गे गच्छति, यथा नावमन्तरा भयंकरं समुद्रं तर्तुं न शक्नोति मानवः, तथैव ज्ञाननौकां विना भवसागरपारं गन्तुं न पारयति कश्चन साधकः।

---

१- तत्त्वानि यो वेदयते यथायथं गुणांश्च सर्वानखिलांश्ख देवताः ।
विधूतपाप्मा प्रविमुच्य बन्धनं स सर्वलोकानमलान् समश्नुते ॥०॥

२- आत्मसंगी च तत्त्वज्ञो मुच्यते नात्र संशयः ॥

३- प्रधानगुणतत्त्वज्ञः सर्वभूतप्रधानवित् ।
निर्ममो निरहंकारो मुच्यते नात्र संशयः ॥०॥

४- ज्ञानं निःश्रेय इत्याहुः वृद्धा निश्चितदर्शनाः ।
तस्माज्ज्ञानेन शुद्धेन मुच्यन्ते सर्वकिल्विषैः ॥०॥

दुःखानामात्यन्तिकनिवृतिः न लौकिकैर्नापि वैदिकैरुपायैः सम्भवति, किन्तु ज्ञानद्वारा दुःखानां मूलकारणस्याज्ञानस्य नाशः सम्भवति। अज्ञानमन्धकार इव सर्वेषां तथ्यानामावरकमस्ति, तथा ज्ञानमालोक इव सर्वतत्त्वप्रकाशकम् यथाकाशे चन्द्रोदयेन अन्धकारो दूरीभवति, तथैव ज्ञानोदयेन मानसपटलमाश्रित्य स्थितमज्ञानं नश्यति। ज्ञानं मुक्तिसाधकम्। अत एव वेदेषु उपनिषतसु पुराणेषु इतिहासे च ज्ञानस्य महिमा सविस्तरं गीतोऽस्ति। तत्त्वानां विश्लेषणे दर्शनानां भिन्नभिन्नधारासु वैषम्ये सत्यपि ज्ञानगरिम्णि विषये समस्तानां तत्त्वज्ञानिनामैकमत्यमस्ति। इदमेवास्ति भारतीयदर्शनानां महन् महत्त्वम्।

यद्यपि महामुनिः कपिलः सांख्यस्य प्रवक्ता आदिविद्वानित्युच्यते, तथापि ततः प्रागपि मुनीनां समाजेऽध्यात्मविद्या प्रचलितासीदित्यत्र नास्ति कापि केषाञ्चिदपि विप्रतिपत्तिः, यतो हि कपिलात् प्राग्वर्तिषु अपि ग्रन्थेषु सगुणनिर्गुणज्ञानपरम्परा समुपलभ्यते। शाकलसंहितायाम् (६।६।९) निगुर्णस्यात्मज्ञानस्य संकेतोऽवगम्यते। पूर्व मुनिसमाजे सगुणनिर्गुणज्ञानमयः सोपपत्तिकोऽध्यात्मविद्याप्रवाहः प्रचलन्नासीत्। अत एवोपनिषत्सु स्थले स्थले युक्तिपूर्वकमात्मज्ञाननिरूपणं दरीदृश्यते।

निरुक्ते "ऋषयो दर्शनात्" (२।३) इत्यस्य व्याख्याप्रसंगे दुर्गाचार्येण ऋषयः खलु तारकज्ञानान्विता बभुवुरित्युक्तम्। एतेन प्राक्तना ऋषयः आत्मज्ञानज्ञातार

आसन्नित्यत्र नास्ति कश्चित् सन्देहः। अत एव वायुपुराणे (५।९) ब्रह्मपुराणे (१।३२) मत्स्यपुराणे (१४।५) अध्यायेषु सांख्यज्ञानानुसारमेवार्षज्ञान प्रचलित-मासीदिति स्वीकृतम्। गरुडपुराणेऽपि----

**यतीनां यतचित्तानां ज्ञानिनामूर्ध्वरेतसाम् ।**
**आनन्दं ब्रह्म तत्स्थानं यस्मान्नावर्तते मुनिः ।।०।।**
**योगिनाममृतस्थानं व्योमाख्यं परमाक्षरम् ।**
**आनन्दमैश्वरं यस्मान्मुक्तो नावर्तते नरः ।।०।।**
**मुक्तिरष्टाङ्गविज्ञानात् संक्षेपात् तद्वद शृणु ।।**[1]

आत्मज्ञानस्य व्युत्पादनं खलु दर्शनशास्त्रस्य मुख्यमुद्देश्यमस्ति। तच्चान्विक्षिकीपद्धत्यनुसारमात्मविद्याया विवेचनं भगवता कपिलेन समारब्धम्। ततः तच्छिष्य प्रशिष्यादिभिः आसुरिपञ्चशिखप्रभृतिभिः तत् प्रवर्तितम्। ततः प्रचलितः सांख्यदर्शनसम्प्रदायः। सर्वप्रथमं भगवता कपिलेन स्वमातरं देवहूतिं प्रतिदर्शनानुगतपद्धत्य विश्लेषणपूर्वकं साङ्ख्ययोगयोः प्रवचनं कृतम्----

**विदित्वार्थं कपिलो मातुरित्थं जातस्नेही यत्र तन्वाभिजातः ।**
**तत्त्वाम्नायं यत् प्रवदन्ति साङ्ख्यं प्रोवाच वै भक्तिवितानयोगम् ।।**[2]

१- गरुडपुराण ४९।२७-२८।

२- श्रीमद्भागवत ३।२४।३१।

ततः स आदिविद्वानित्युच्यते। अध्यात्मशास्त्रं चिन्ताप्रधानं भवति। सा च चिन्ता साङ्ख्यदर्शनानुयायिनी महाभारते (१२।३०१।६) प्रोक्ता-- "साङ्ख्यागतं तन्निखिलं नरेन्द्र" (१२।३०१।१०८) इति वदता भगवता व्यासेन साङ्ख्यदर्शनं सर्वदर्शनमूर्धन्यमभुपगतम्। अपि च महाभारते (१२।२१८) आन्विक्षिकीविद्या-प्राधान्यात् साङ्ख्यदर्शनं सर्वेषां समुद्बोधकरं स्वीकृतमस्ति।

## सांख्ययोगदर्शनमीमांसा

साङ्ख्यदर्शनं हि भारतीयदर्शनपरम्परायामत्यन्तं प्राचीनं प्रभावोत्पादकं च दर्शनमस्ति। महर्षिणा कपिलेन प्रणीतं दर्शनं कापिलमित्युच्यते। एतदेव दर्शन-मन्वर्थतया साङ्ख्यमिति संगीर्यते। तथाहि-- सम्यक् ख्यानं संख्या सास्ति अस्मिन्निति सांख्यं तत्त्वज्ञानविधानसमर्थं दर्शनमित्यर्थः। यद्वा सांख्यां पदार्थानां गणना तत्प्रधानं दर्शनं सांख्यं। भवति चात्र व्यक्ताव्यक्तज्ञसंज्ञानां महदहंकारैकादशैन्द्रियपञ्चतन्मात्र-पञ्चमहाभूतेति त्रयोविंशतेर्व्यक्तानां एकस्याः अव्यक्तायाः प्रकृतेरेकस्य ज्ञस्य पुरुषस्य चेति पञ्चविंशतितत्त्वानां निखिलदर्शनान्तरापेक्षयाऽधिकानां गणना प्रधान्येन।

दर्शनेऽस्मिन् सत्त्वरजस्तमसां साम्यावस्थास्वरूपायाः प्रकृतेरेव सकलप्रपञ्च-कर्तृत्वम्। पुरुषस्य तु पुष्करपलाशवन्निर्लेपस्यापि चेतनत्वेन जडायां प्रकृतौ चैतन्याभिमानसम्पादकत्वम्। अचेतनानां भोग्यानां भोक्तृत्वञ्चेति द्वयमेव कृत्यम्।

जगता आरम्भस्तु प्रकृतेरेव भवति। तथा चोक्तं सांख्यकारिकायाम्----

प्रकृतेर्महान् ततोऽहंकारः तस्माद् गणश्च षोडशकः ।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि ।।०।।[१]

तस्मात् सांख्यनये प्रकृत्यैव जगदुत्पत्तौ सिद्धायामीश्वरोऽनावश्यकः। आध्यात्मिकाधिदैविकाधिभौतिकदुःखत्रयात्यन्तिकनिवृत्तिरेवापवर्गः। स च व्यक्ताव्यक्तज्ञविज्ञानात् सत्पुरुषान्यताख्यातिरूपः परिणमते। सति चापवर्गे सत्परूपविनिवृत्तिः पर्यवस्यति। अचेतनायाः प्रकृतेः प्रवृत्तिश्च वत्सविवृद्धयेऽज्ञस्य क्षीरस्य प्रकृत्तेर्दृष्टान्तेन समर्थिता।

सांख्यदर्शनं हि तत्र विच्छितिः (१।१।१) इत्यतः यद्वा तद्वा (६।३५) इत्यन्तं षडध्यायात्मकम्। तत्र प्रथमाध्याये विषया निरूपिताः, द्वितीये प्रकृतेः कार्याणि, तृतीये विषयेभ्यो वैराग्यम् , चतुर्थे विरक्तानां पिंगलाकुरवादीनामाख्यायिका, पञ्चमे परपक्षनिर्णयः, षष्ठे सर्वार्थसंक्षेपः। प्रकृतिपुरुषविवेकज्ञानेन त्रिविधदुःख्यात्यन्त निवृथत्तिरेव सांख्यशास्त्रस्य प्रयोजनम्।

---

१- सांख्यकारिका।

सांख्यैः सर्वस्यैव वस्तुनः त्रिगुणात्मकत्वेन सुखदुःखमोहात्मकतया संघातत्वेन अव्यक्तादयः प्रकृत्यतिरिक्तचेतनार्थाः संघाततत्वात् शय्यासनादिवत् , महदादि किञ्चित्करणेऽधिष्ठीयमानं सुखाद्यात्मकत्वाद् रथादिवत्। इत्यादि-- अनुमानेभ्यः प्रकृत्यादिचतुर्विंशतिव्यतिरिक्तः पुरुषोऽस्ति, स च प्रतिशरीरं भिन्नोऽन्यथा पुरुषैकत्वे जन्ममरणसुखदुःखबन्धमोक्षव्यवस्था न सिद्धेत्। तथाहि-- पुरुषस्यैकत्वे एकस्मिन् जायमाने सर्वे जायेरन् , एकस्मिन् म्रियमाणे सर्वे म्रियेरन् , एकस्मिन् सुखिनि सर्वेऽपि सुखिनः स्युः, एकस्मिन् दुःखिनि सर्वेऽपि दुखिनः स्युः, एकस्मिन् वद्धे सर्वे वद्धेरन् , एकस्मिन् मुक्ते सर्वेऽपि मुच्येरन्। तस्मात् प्रतिशरीरं पुरुषो भिन्नः। अत एव सांख्यदर्शननये पुरुषबहुत्वं सिध्यति।

कालविशेषे क्षोभितायाः प्रकृतेः प्रथमः परिणामो महत्तत्त्वम्। एतदेव सत्त्वबुद्ध्यादिशब्दवेद्यं स्वविवेकाद् वस्तुतो भोक्तृत्वादिविधुरं पुमांसं भोक्तृत्वादिभिः धर्मैः वध्नाति। परमार्थतः कर्तृत्वाद्यसंस्पृष्टस्य तस्य बुद्धौ चैतन्याभिमानान्यथानुपपत्त्या कल्पितस्य कूटस्थनित्यस्य अन्तःकरणात्मतया योगोपदिष्टदिशा साक्षात्कृतस्य स्वरूपावस्थानं मोक्षः। सांख्यदर्शनाद् योगदर्शने अन्यतत्त्वातिरिक्तस्यैकस्य परमेश्वरस्यास्तित्वस्वीकारो विशेषः।

'सांख्यमते असंगोऽयं पुरुषः' (१।१५) इति सांख्यसूत्रप्रामाण्यात् शरीरेन्द्रियप्रकृत्यादिपरः उदासीनः असंगः पुरुषः एवास्ति आत्मा। ननु शरीरे स्थितः पुरुषः कथमसंगो भवितुमर्हतीति न वाच्यम् , यतो हि संयोगमात्रेणैव न संगो भवति, यथा कमलपत्रस्य जलेन संयोगे सत्यपि असंयोग एव। एवं प्रकृत्या-दिसंयोगे सत्यपि पुरुषः असंग एव। अत एवोक्तं प्रकृतिः कर्त्री, पुरुषस्तु पुष्करपलाशवन्निर्लेपः, किन्तु चेतनः। निःसंगस्य पुरुषस्याविवेकेनैव विषयेषु प्रतीतिर्भवति। तथाहि सांख्यसूत्रम्-- "निःसंगेऽप्युपरागोऽविवेकाद्" संगरहिते पुरुष वस्तुत उपरागाभावेऽपि औपचारिकप्रतिबिम्ब एव विषयप्रतीतिशाली। एतच्च जपास्फटिकयोरिव नोपरागः किन्त्वभिमानः (६।२८) इति सूत्रेणाधिकं सुस्पष्टं भवति। यथा स्वच्छे स्फटिके जपाकुसुमसंयोगेन रक्तता प्रतीयते, तथैव निर्मले पुरुषे वस्तुतः प्रतीत्यभावेऽपि प्रतिबिम्बवशाद् भ्रान्त्या अभिमानमात्रं भवति। भ्रान्त्यैव कर्तृत्वादिभावः। इदं विषयाभिमानमेव पुरुषस्य वन्धहेतुः। एतच्च सर्वमविवेकमूलम्। विवेकेनाविवेकस्य नाशे सति पुरुषोऽसंग एव। अतोऽसंगे पुरुषे केवलमविद्यावशा-दौपाधिको भेदः प्रतीयते।

यद्यपि 'ईश्वरासिद्धे' (१।९२) 'मुक्तबद्धयोरन्यतराभावात् तत्सिद्धिः' (१।९३) इत्यादिसांख्यसूत्रावलोकनेन सांख्यैरीश्वरो न मन्यते इति बुद्धावापाततः प्रतिभासते, तथापि परमार्थविचारणायाम् 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ,

इति वाक्येन निरीश्वरवादस्य निन्दिततत्वेन सांख्ये व्यावहारिकस्येश्वरस्य प्रतिषेधो वैराग्यार्थमिति गम्यते। अन्यथा चार्वाकवत् नित्यैश्वर्यप्रतिषेधाभावेन परिपूर्ण नित्य-निर्दोषदर्शनेन तत्र चित्तावेशात् सत्त्वपुरुषान्यता प्रतिबन्धः स्यात् , तस्मात् सांख्यैः प्रौढ्या ईश्वरः प्रतिषिध्यते इति विभावनीयम्।

योगिनो हि सांख्यदर्शनाभिमतामेव सृष्टिप्रक्रियां तदभिमतान्येव तत्त्वानि तदङ्गीकृतान्येव त्रीणि प्रमाणानि चाभ्युपगच्छन्तः केवलं तद्विलक्षणम् 'क्लेशकर्म-विपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' (१।२४) इति लक्षणलक्षितमीश्वरं स्वीकृत्य स्वकीयं दर्शनं नास्तिकताकलङ्कपङ्कतः क्षालयाम्बभूवुः। अपि च चित्तवृत्तिनिरोध रूपसमाधिसंप्रज्ञातासंप्रज्ञाज्ञततत्त्वाभ्यां सविकल्पकनिर्विकल्पकत्वापरपर्यायं द्विधा-भिद्यमानं कैवल्यं मन्वते। चित्तवृतिनिरोधरूपस्य योगस्य यमनियमासनप्राणायाम प्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि च स्वीकुर्वते। योगस्य प्राधान्येन कैवल्य फलकत्वेऽप्यवान्तरफलानि विभूतयो विजृम्भन्ते। अत एव समाधि-साधन-विभूति-कैवल्याख्यान् चतुरः पादान् प्रणिनाय भगवान् पतञ्जलिः। तत्र प्रथमे पादे मुख्यतया चित्तवृतिनिरोधरूपस्य योगसमाधेरभ्यासवैराग्ययोः साधनस्याति विवेचनम्। द्वितीये पादे विक्षिप्तचित्तस्य समाधिसिद्धये योगस्याष्टावङ्गानि उक्तानि। तृतीये पादे विभूतितत्त्वज्ञानमन्तरा भगवत्तत्त्वज्ञानमपि दुःशकमिति तत्र श्रद्धोत्पादनाय विभूतिज्ञानमावश्यकमिति कृत्वा योगजविभूतयः प्रदर्शिताः।

चतुर्दशभुवनविलसिताण्डकटाहवर्तिजरायुजाण्डजस्वेदजोदभिज्ज-चतुर्विधभूतग्रामे एक एवेश्वरः पटेषु तन्तुवदोतप्रोत आभाति। यद्यपि प्रतिदर्शनं तत्लक्षणं भिद्यते, तथापि ऐश्वर्यार्थकादीशधातोः "स्थेशभासपिसकसो वरच्" (३।२।१७५) इति पाणिनीयसूत्रेण वरचि प्रत्यये कृते निष्पन्नस्येश्वरशब्दस्य पूर्वोक्ते लक्षणे पुरुषविशेष इति कथनेन सांख्यदर्शनोक्तो बहुपुरुषवादो निराकृतः। अर्थाद् यादृशः पुरुषः सांख्यैर्मन्यते तद्विलक्षणाः पुरुषो योगे ईश्वरपदवाच्य इति पतञ्जलेराशयः। एवं पुरुषबहुत्वे आपत्तिमुदभाव्य पतञ्जलिना ईश्वरलक्षणे विशेषपदमुपात्तम्।

साधनाप्रधानत्वाद् योगदर्शने कर्मतत्त्वं विस्तरेण विवृतम्। कर्माशयः कर्मसंस्कारः। विपाकादयो विषया अपि उत्सर्गापवादन्यायेन विवृताः। ईश्वरप्रणिधान-विचारप्रसंगादीश्वरस्वरूपविचारोऽपि योगदर्शनस्य मुख्यविषयेष्वन्यतमः। स साधनसमाधिविचारः खलु योगदर्शनस्यासाधारणो विषयः। सांख्ये तु पदार्थरूपेणैव एषामुत्लेखः। क्लेशनां विभूतीनां च चर्चापि योगीयासोपकारिणीं मत्वा पतञ्जलिना प्रपञ्चिता। पुराणेषु महाभारते च योगविद्याप्रस्तावे इमे विषयाः सम्यगुपदर्शिताः। चित्तस्य स्वरूपं वस्तुचित्तसम्बन्धः, चित्तनिरोधः, एकाग्रतादिपरिणामाश्चेत्यादयो विषयाः कैवल्यार्थमवश्यं ज्ञेयाः। अत एव योगसूत्रस्य चतुर्थे पादे कैवल्यविषयकं तत्त्वज्ञानमान्विक्षिकीपद्धत्या विवृतम्। अर्वाग्दर्शिनां बोद्धादीनां चित्तं न शाश्वतं

निरोधयुक्तम् चित्तातिरिक्तस्य द्रव्यस्यानधिगतत्वात्। व्यक्ताव्यक्तज्ञरूपाणां पदार्थानां प्रविभागपूर्वकमसंकीर्णं ज्ञानं खलु सांख्ययोगिनां सम्यग्दर्शिनामेवेति संक्षेपः।

# *तृतीयोऽध्यायः*

**विषयः= सांख्ययोगतत्व विकासक्रमः।**

भारतीयहिन्दुपरम्परायां 'यथा नाम तथा गुणः' इत्याधारेण बहुशः विचार्य कस्यापि नामकरणं क्रियते, येन तद्व्यक्तेः गुणावगुणाविशेषतादीनामाभासः सहसा जायते। धर्मशास्त्रानु-सारं नामकरणमेकः षोडसंस्कारेषु अन्यतमः संस्कारो मन्यते। अतः हिन्दुसमाजे कस्यापि नामकरणं महत्या सावधानतया क्रियते। न केवलं मानवा एव प्रत्युत प्रायः सर्वे ग्रन्थलेखका महाकवयोऽपि अस्याः प्रथायाः सम्यक् पालनं कुर्वन्ति। रामायण-महाभारत-पुराण-रघुवंश-कुमारसम्भव-अभिज्ञानशाकुन्तल-मेघदूत-शिशुपालवध-किरातार्जुनीय-नैषधीयचरित-दशकुमार-चरित-शिवराजविजय-प्रतापविजय-पारिजातहरण-रुक्मिणीहरण-उषापरिणयादिभिर्नामभिः तेषां काव्य-नाटकादीनां प्रतिपाद्यविषयाः स्पष्टरूपेण ज्ञायन्ते।

न ह्येतावदेव लेखकास्तु स्वग्रन्थानां नायक प्रतिनायक तत्पात्राणामपि ईदृक् नाम कुर्वन्ति, येन तच्चारित्रिकविशेषता स्पष्टतया प्रतीयते। वाल्मीकिरामायण-नायकस्य भगवतः श्रीरामचन्द्रस्य नामश्रवणमात्रेण तत्कालमर्थः प्रतीयते यत् 'रमन्ते योगिनो यस्मिन् स राम' इति व्युत्पत्यनुसारं रामो मर्यादापालकतया सर्वप्रियो भूत्वा सर्वप्राणिनां हृदयेषु रमणशीलोऽस्ति, तथा रावयति सर्वं लोकमिति रावण इति विवरणानुसारं दुर्दान्तत्वाद् स स्वकर्मणा सर्वं प्राणीनं रोदयत्येव।

एवं महाभारतनायकस्य धर्मराज युधिष्ठिरस्य नाम्नाऽयमर्थो व्यक्तीभवति यद् युधि स्थिरः युधिष्ठिर इत्यनुसारं स सदा युद्धे स्थिर आसीत् तथा विविधेषु संकटष्वपि न विचलतिस्म। तथा प्रतिनायकः दुर्योधनो दुःखेन युध्यते इति दुर्योधन इत्यनुसारं स दुराग्रही दुष्टशिरोमणिर्द्वेषी, अन्यायी, युद्धप्रियश्चासीत् , तथैव दुःशासनः दुःखेन शासयते इत्यनुसारं दुर्दान्तः निजदुष्टतया विख्यातः कौरवसभायां सत्या द्रौपद्या नग्नीकरणे आत्मगौरवमनुभवतिस्म। तत्रैव भीमोऽपि शत्रूणां कृते भयङ्करत्वात् स्वगदया दुष्टस्य दुःशासनस्यं वक्षः स्थलं विदार्य तद्रुधिरं पातुं लालायित आसीत् , तथाऽन्यायिनो दुर्योधनस्योरुभङ्गं कृत्वा तद्रुधिरेण द्रौपदीकेशसंयमनाय सदोद्यत आसीत्। अतः पुराणानामपि अन्वयार्थकं सार्थक-श्चास्ती-त्यस्य विवेचनमग्रे क्रियते।

## पुराणशब्दस्य व्युत्पत्तिरर्थस्य

पुरति अग्रे गच्छतीति पुरा। तुदादिगणपठितात् पुर अग्रगमने इति धातोः औणादिके काप्रत्यये कृते पुराशब्दो निष्पद्यते, योऽव्ययो मन्यते। कोशानुसारं च स त्रिषु अर्थेषु प्रयुज्यते-प्रबन्धे, अतीतकाले, संकटे च। तथाहि-स्यात् प्रबन्धे पुरातीते संकटागमिके तथा। (मे०को० १५)

(१) पुराणपूर्वकात् देवादिकादण् प्राणने इति धातोः पचाद्यचि कृते पुराणशब्दो निष्पद्यते। अच्प्रत्ययान्त्वात्-घञ्जपः पुंसि-इत्यानुसारं पुराण-शब्दस्य पुल्लिङ्गे प्रयोग संभवितुमर्हति, किन्तु पुराणं पञ्चलक्षणम्।[1] पुराणं षोडशप्रापणे पुराणं प्रत्नशास्त्रयोः।[2] पुराणं ग्रन्थभेदे च क्लीबे त्रिषु पुरातने।[3] इत्याद्यनुसारं पुराणशब्दस्य नपुंसकलिङ्गे प्रयोगो भवति।

(२) पुरा भवः पुराणमिति विग्रहे 'पुरा' अव्ययात् 'सायं चिरं प्राह्णेप्रगेऽव्ययेभ्यष्ट्यु-ट्युलौ लुट् च (पा०सू० ४।३।३२) इति सूत्रात् ट्यूप्रत्ययानन्तरं टकारस्येत्संज्ञायां लोपे च कृते युवोरनाकौ (पा०सू० ७।१।१) इत्यनेन योरनादेशे (अट्- कुप्वाङ्नुम्व्य-

---

१- मत्स्यपुराणे ५।४।६४।

२- हेमचन्द्रकोष पृ०१३ पं०७।

३- नानार्थरत्नमाला पृ०७७, पं०८।

वायेऽपि पा०सूं० ८।४।२३) इति पाणिनीयसूत्रेणत्वे 'पूर्वकालैकसर्वजरत् पुराणं नव केवला समाधिकरणेन' (पा०सू० २।१।४) अथवा 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' (४।३।१०४) इत्यादिपाणिनिसूत्रेषु पुराणशब्दस्य निर्देशात् निपाततेन तुटोऽभावे पुराणशब्दः सिध्यति।

(३) पुरा पुरतनम् अनीति जीवयति बोधयति इति पुराणं ग्रन्थविशेषः, पुरा पूर्वकात् आदादिकात् अण् प्राणने इति धातोरचिणत्वे च कृते पुराणशब्दो निष्पद्यते।

(४) पुरा अतीतान् अर्थान् अणति कथयति इति व्युत्पत्तौ पुरा उपपदात् भौवादिकता अण् शब्दे इति धातोः पचादित्वाद् अचिप्रत्यये सति पुराणशब्दः सिध्यति।

(५) पुरापूर्वकणीञ् प्रापणे इति धातोः औणादिके डप्रत्यये टिलोपे णत्वे च कृते पुराणशब्दो निष्पद्यते। अर्थात् पुरा+नी+ड - इमें त्रयोऽवयवा मिलित्वा पुराणशब्दरूपेण परिणता भवन्ति।

(६) महर्षिणा यास्काचार्येण स्वकीये निरुक्तग्रनी पुराणशब्दस्य निर्वचनं कुर्वता प्रोक्तमस्ति यत् पुराणं कस्मात् ? अतो यत् कदापि पूर्व नव स्यात्। निरुक्ते

यास्काचार्यस्यैवं प्रकारेण निर्वचनेन पुराणेनवीवनताया भावो नास्ति, किन्तु पुराणशब्दस्यार्थः प्राचीनोऽस्ति।

यद्यपि पुराणशब्दस्य पर्यायवाचिनः प्रत्न-प्रतन-पुरातन-चिरन्तनादयः शब्दाः सन्ति तथापि अत्र पुराशब्देन प्राचीनाख्यायिकादियुक्ता महर्षिव्यासद्वारा निर्मिता अष्टादशग्रन्थविशेषा एव ज्ञायन्ते। यदि पुराणं कश्चिद् नवीनं कथयति तर्हि स एव कथयितुमुद्यतो भविष्यति, यस्य पूर्वोक्तानां व्युत्पत्तीनां ज्ञानं नास्ति। विचारशीलास्तु व्युत्पत्ति मात्र एव पुराणं प्राचीनतमं ग्रन्थविशेषं मन्यते। संस्कृतसाहित्यस्य सर्वे ग्रन्थकारा इममेवार्थं स्वीकुर्वन्ति तथा स्वयं पुराणान्यपि अस्यैवार्थस्य मान्यतां प्रददति। तथाहि मत्स्यपुराणम्----

**पुरातनस्य कल्पस्य पुराणानि विदुर्बुधाः ।**[१]

वायुपुराणमपि प्राचीनकालतोऽद्यावधि जीवितं साहित्यमेव पुराणं मनुते---

**यस्मात् पुरा ह्यनक्तीदं पुराणं तेन कथयते ।**
**निरुक्तमस्य यो वेद सर्वपापै प्रमुच्यते ।।०।।**[२]

---

१- ५।३।७२।

२- १।२०३।

पद्मपुराणानुसारं प्राचीनां परम्परां व्यक्तीकर्तुं समर्थं शास्त्रमेव पुराणमुच्यते---

**पुरा परम्परां व्यक्ति पुराणं तेन वै स्मृतम् ।[१]**

ब्रह्माण्डपुराणे तु इतो भिन्नेव व्युत्पत्तिरुपलभ्यते-पुरा एतदभूत् अर्थात्-प्राचीनकाले ईदृगासीत्। अत एतत् पुराणमुच्यते----

**यस्मात् पुरा ह्यभूच्चैतत् पुराणं तेन तत् स्मृतम् ।[२]**

एवं विभिन्नेषु पुराणेषु कृतायां व्युत्पत्तौ ध्यानप्रदानेन प्रतीयते, यत् पुराणस्य वर्ण्यविषयाः प्राचीनकालतः सम्बद्धाः सन्ति। अपि च पुराणशब्दश्रवणमात्रेणैव व्यासकृतानामष्टादशानां पुराणग्रन्थानां सहसा स्मरणं जायते। प्राचीनानि सन्त्यपि पुराणानि रचनावैचित्र्य-वस्तु-वैत्रित्र्याभ्यां सदा अभिनवानि प्रतीयन्त। एवं सृष्टि-प्रलय-प्रसिद्धराजर्षि-वंशपरम्परा-मनुवर्णन-विशिष्टमानवानां पावनचरित्राणां च वर्णनं यस्मिन् ग्रन्थे विद्यते तत् पुराणमुच्यते।

---

१- १।२।५४।
२- १।१।१७३।

## पुराणानां प्राथमिकं स्वरूपम्

पुराणानां विकासक्रमे विशेषरूपेण द्वे धारे लक्षिते भवतः एका व्यासपूर्वधारा, द्वितीया च व्यासोत्तरधारा। यथा व्यासात् पूर्व वेद एक एवासीत् तथैव पुराणमपि एकमेवासीत् , यस्मिन् शतकोटिः श्लोका आसन्। पश्चाद् भगवता व्यासेन तेषामभिप्रायान् चतुर्लक्षश्लोकेषु सङ्कलय्य अष्टादशभागेषु च विभज्य अष्टादशनामानि कृतानि, यानि अद्यत्वे प्रचलितानि अष्टादशपुराणानि प्रोच्यन्ते। यस्य स्पष्टं सङ्केतोऽस्माभिः विभिन्नेषु पुराणेषु प्राप्यते।

स्कन्दपुराणे लिखितमस्ति यद् व्यासात्पूर्वं पुराणमेकमेवासीत् , यत् त्रिवर्ग (धर्मार्थकाम) साधनमासीत् , यत्र शतकोटिश्लोका आसन् कल्पस्यारम्भे चतुर्मुखेन ब्रह्मणा तेषां स्मरणं कृत्वा महर्षीन् प्रति प्रोक्तम्। अतः पुराणं प्रति सर्वेषां शास्त्राणां प्रवृत्तिर्जाता। समयपरिवर्तनेनैतावतो विशालकायस्य पुराणसाहित्यस्य ग्रहणं स्वल्पसामर्थ्यशालिनोऽलपबुद्धेश्च मनुष्यस्य कृते साध्यं नासीदतो द्वापरान्ते भगवान् विष्णुः व्यासरूपेणावतीर्य मानवानां कल्याणार्थं तद् विशालं पुराणसाहित्यं चतुर्षु लक्षेषु श्लोकेषु संक्षिप्यष्टादशसु भागेषु विभक्तवान्। यद्यपि भूतले उपलभ्यते। शतकोटिप्रविस्तरमादिपुराणमद्यत्वेऽपि देवलोके विद्यते----

पुराणमेकमेवासीदस्मिन् कल्पान्तरे मुने ।
त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ।।०।।
स्मृत्वा जगाद च मुनीन् प्राति देवश्चतुर्मुखः ।
प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः ।।०।।
कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो मुनिः ।
व्यासरूपं विभुः कृत्वा संहरेत् स पुनः पुनः ।।०।।
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ।
तदष्टादशधा कृत्वा भूर्लोकेऽस्मिन् प्रभाष्यते ।।०।।
अद्यापि देवलोके तच्छतकोटिप्रविस्तरम् ।
तदर्थोऽत्र चतुर्लक्षं संक्षेपेण निवेशितम् ।।०।।

(स्कन्दपुराणे रेवाखण्डे १।२४-२९)

अस्यैव पुष्टिः विभिन्नैः पुराणैः किञ्चिच्छब्दपरिवर्तनेन सह कृतमस्तिं मत्स्यपुराणे लिखितमस्ति यत् लोकपितामहेन ब्रह्मणा सर्वेषां शास्त्राणां निर्माणात् पूर्वं पुराणानां स्मरणं कृतम् , तदनन्तरं तस्य मुखेभ्यो वेदानामाविर्भावो जातः। यदा ब्रह्मणा पुराणस्मरणं कृतं तदा शतकोटिश्लोकविस्तारं पुण्यप्रदं धर्मार्थकामप्रदं तत्पुराणमेकमेवासीत्। अग्रे जनानां पुराणं प्रति अभिरुचिमालोक्य स्वयं परब्रह्मपरमात्मना द्वापरान्ते व्यासरूपेणावतीर्य यत् शतकोटिप्रविस्तरं पुराणं चतुर्लक्षश्लोकेषु परिवर्त्य अष्टादशविभागेषु प्रविभज्य पृथिव्यां प्रकाशितं किन्तु शतकोटि-श्लोकैर्निबद्धं तत्पुराणमद्यापि देवलोके वर्तते----

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।

अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ।।०।।

पुराणमेकमेवासीत्तदा कल्पान्तिरेऽनघ ।

त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ।।०।।

कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो नृप ।

व्यासरूपमहं कृत्वा संहरामि युगे युगे ।।०।।

चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ।

तथाष्टादशधा कृत्वा भूलोकेऽस्मिन् प्रकाश्यते ।।०।।

(मत्स्यपुराणे ५३।३-४,९-११)

अक्षरशोऽस्यैव समर्थनं सृष्टिखण्डीय (१।४५।५०-५३) पद्मपुराणवचनैरपि भवति। समेषामेषां सारसंग्रहो भविष्यपुराणे एवमस्ति----

अद्यापि देवलोकेऽस्ति शतकोटिप्रविस्तरम् ।

तदर्थोऽत्र चतुर्लक्षं संक्षेपेण विशेषितम् ।।०।।

पुराणमेकमेवासीत् सर्वं कल्पेषु मानव ।

चतुर्वर्गस्य बीजं च शतकोटिप्रविस्तरम् ।।०।।

कालेनाग्रहणं दृष्ट्वा पुराणस्य महामतिः ।

हरिर्हि व्यासरूपेणजायते च युगे युगे ।।०।।

चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ।

तदष्टादशधा कृत्वा भूर्लोके निर्दिशत्यपि ।।०।।

अद्यपि देवलोकषु शतकोटिप्रविस्तरम् ।

अस्त्येव तस्य सारस्तु चतुर्लक्षेण वर्ण्यते ।।०।।

(भविष्यपुराणे १२।२२-२६)

स्कन्दपुराणस्य नागरखण्डेऽङ्कितमस्ति यत् शतकोटिकं पुराणं पूर्वमेकमेवासीत्। अनन्तरं द्वापरे नारायणस्यांशसमुद्भवेन वेदव्यासेन तद् अष्टादशभागेषु विभज्य लोके प्रचारितम्----

एकमेव पुरा ह्यासीत् पुराणं शतकोटिधा ।

ततोऽष्टादशधा कृत्वा वेदव्यासो युगे युगे ।।

प्रख्यापयति लोकेऽस्मिन् साक्षान्नारायणांशजः ।।०।।

(स्कन्दपुराणीयनागरखण्डे २।८)

देवीभागवतेऽपि लिखितमस्ति यद् भगवान् विष्णुः कलिजीवनं अल्पायुषः स्वल्पबुद्धींश्चावलोक्य व्यासरूपेणावतीर्य प्रति द्वापरं वेदपुराणं संकलयति----

द्वापरे द्वापरे विष्णुर्व्यासरूपेण सर्वदा ।

वेदमेकं च बहुधा कुरुते हितकाम्यया ।।०।।

अल्पायुषोऽल्पबुद्धींश्च विप्रान् ज्ञात्वा कलावथ ।

पुराणसंहितां पुण्यां कुरुतेऽसौ युगे युगे ।।०।।

(देवीभागवते १।३।१९-२०)

एवं वर्तमानाष्टादशानां पुराणानां निर्माणस्य श्रेयः महर्षेः कृष्णद्वैपायनव्यास-स्यैवमस्ति, येन देवलोके अद्यापि विद्यमानस्य शतकोटिप्रविस्तरस्य मूलपुराणस्य सारं संगृह्य चतुर्लक्षश्लोकद्वारा अष्टादशपुराणरूपेण संग्रन्थ्य मानवमात्रस्य परमं कल्याणं कृतम्। तात्पर्यमिदमस्ति यद् यथा एकस्यैव वेदस्य ऋग्यजुः सामाथर्वरूपेण भेदं मत्वा चत्वारो वेदा इति व्यवहारो भवति तथैव शतकोटिप्रविस्तरस्यैवैकस्यापि आदिपुराणस्य संक्षेपं कृत्वा ब्रह्मपुराण-पद्मपुराण-विष्णुपुराणादि-नाम्ना अष्टादशपुराणानीति व्यवहारो जायते।

सत्ययुगस्यारम्भे वेदात्पूर्वं ब्रह्मणा यस्य पुराणस्य स्मरणं कृतमासीत्तत् शतकोटि-प्रविस्तरमेकमेव पुराणमासीत् ब्रह्मद्वारा स्मरणात् अस्य पुराणस्यैकं नाम ब्रह्मं ब्रह्माण्डं वा पुराणेषूपलभ्यते----

**ब्राह्मेव कृतं चाद्यं पुराणं श्रुतिसारगम् ।।** (वि०पु०वि०व्या० ३।६।१५)

**एकमेव पुरा ह्यासीद् ब्रह्माण्डं शतकोटिधा ।।** (स्क०पु०प्र०ख० २।८)

प्रथमं शतकोटिप्रविस्तरं पुराणमेकमेवासीदतो वेदे उपनिषदि च पुराणशब्दस्य एकवचनान्त एव प्रयोग उपलभ्यते।

विष्णुपुराणस्य विप्रचित्तिव्याख्यायां लिखितमस्ति यत् सत्ययुगे ब्रह्मणा वेदस्मरणात् पूर्वं यस्य ब्राह्मसंज्ञकस्य शतकोटिप्रविस्तरस्य पुराणस्य स्मरणं कृतमासीत् त्रेतायुगे तस्यैव संक्षेपं विधाय ब्रह्मादिभिरष्टादशभिर्महर्षिभिः ब्रह्म-पद्मादीनि अष्टादश नामानि कृतानि, पुनः द्वापरे वेदव्यासो हि तेषां संग्रह कृत्वा ग्रन्थाकारेणाष्टादश भागान् विभज्य स्वं परमं प्रियं शिष्यं लोमहर्षणमध्यापयामास।

कृतयुगे वेदात्पूर्वं ब्रह्मणा स्मृतस्य शतकोटिप्रविस्तरस्य ब्रह्मसंज्ञकस्य पुनः त्रेतायां ब्रह्माद्यष्टादशर्षिभिः संक्षिप्य ब्राह्म-पाद्मेत्याद्यष्टादशात्मना विभक्तस्य पुनः द्वापरान्ते संगृह्य अष्टादशपुराणसंहितां कृत्वा लोमहर्षणं सूतमध्याप-यामास। (वि०पु०वि०व्या० ३।६।१५)

पुराणानामुपक्रमोसंहारयोरध्ययनेन मत्स्य-नारदीयपुराणादिसूचीपारायणेन च स्पष्टं प्रतीयते यत् प्रायः समेषां पुराणानां सम्बन्धो ब्रह्मणा तन्मानसपुत्रैश्च सहास्ति। एवं स्थितौ अग्रे तेषां शिष्य-प्रशिष्य-तच्छिष्यैश्च तत्तत्संवादानामादि-श्रोतृवक्तृमाध्यमेन वर्तमानपुराणरूपं प्रदत्तम्।

यथा वेदाः सन्ति अपौरुषेयाः, गौतम-वसिष्ठात्रिकश्यपवामदेवादयः ऋषयः वेदमन्त्राणां द्रष्टारं सन्ति, न तु कर्तारः, तथैव पुराणानां मौलिकसामग्र्याः कर्ता

कोऽपि नास्ति, किन्तु वेदप्रतिपादितपुराणस्मर्ता ब्रह्मदेवोऽस्ति तथा वक्तारोऽनेके ऋषयः सन्ति। तात्पर्यमिदमस्ति ये ऋषयो वेदस्य द्रष्टारः सन्ति त एव पुराणस्यापि स्मर्त्तारो वक्तारश्च सन्ति। यथा वेदस्यारम्भो ब्रह्मणोऽस्ति तथैव पुराणस्याप्यारम्भोऽपि ब्रह्मण एव। परं वैशिष्ट्यञ्चेदमेवास्ति यद् मन्त्रोपदेशात् पूर्व विनियोगस्यावश्यकता भवति, विनियोगस्य च पूर्णतायै ऋषिदेवताछन्दसां चरित्रस्य च ज्ञानमत्यावश्यकं भवति। अतः प्रथमं पुराणे ज्ञाते सत्येव मन्त्रोपदेशः सफलो भवितुमर्हति, नान्यथा। अनेनैवाभिप्रायेण पुराणेषु प्रोक्तमस्ति यत्तत् सर्वप्रथमं ब्रह्मणो मुखात् पुराणमेव निःसृतं तदनन्तरं तस्य मुखाद् वेदाः प्रादुर्भूताः।

**पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।**
**अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ।।०।।**

(मत्स्यपुराणे ५२।३)

तात्पर्यमिदस्ति यद् वेदमन्त्रापेदशसमये कश्चिदपि वैदिको विद्वान् प्रथमं शिष्यं विनियोगश्च तदैव सफलो भवितुमर्हति यदा ऋषीणां देवतानां च चरित्रज्ञानं स्यात्। अतः पुराणपठनानन्तरमेव वेदाध्ययनस्यावसर आगच्छति। अतएव प्रथमं ब्रह्मद्वारा पुराणस्य स्मरणं ततो वेदाध्ययनं न्यायसंगतं प्रतीयते। एतेनेदं सिध्यति यत् पुराणानां मौलिकसामग्र्याः प्रथमः स्मर्ता ब्रह्मैवास्ति तथा तत्प्रवचनकर्तारो ब्रह्मणो मानसाः पुत्रा मन्त्रद्रष्टारो महर्षयः सन्ति।

वस्तुतः प्रथमं वेदानामेवाविर्भावो जातः तदनन्तरं वेदार्थोपबृंणार्थं तथा वेदानधिकारिणां ज्ञानोपदेशनिमित्तं पुराणानां रचना जाता। अतएवानुपनीतानां बालकानामुपनयनसंस्कारत्पूर्वं पौराणिकस्तोत्रादीनां पठनस्य व्यवस्था विद्यते सभ्यसमाजे। तथोपनयनसंस्कारनन्तरं वेदारम्भः क्रियते। एवं परम्परा शिष्टाजनेषु अद्यत्वेऽपि दृश्यते।

तथा च सृष्टेरारम्भकालतो व्यासात् पूर्वमितस्ततः प्रकीर्णं शतकोटियप्रविस्तरं पुराणं गुरुशिष्यपरम्पराया उपदिष्टं भवतिस्म, किन्तु द्वापरान्ते आगन्तुककलिकाल-कुप्रभावाद् वेदपुराणयोर्लोपाशङ्कया साक्षात् परब्रह्मपरमात्मनाव्यासरूपेणावतीर्य यथा याज्ञिकमंत्रान् संकलय्य ऋग्यजुः सामाथर्वनाम्ना वेदो विशालकायश्चतुर्भागेषु विभक्तस्तथा अद्यत्वेऽपि ब्रह्मलोके वर्तमान-स्यादिपुराणस्य सारं संक्षिप्य चतुर्लक्षश्लोकेषु परिणमय्याष्टादशभागेषु विभज्य च ब्रह्मपद्मादीनि पुराणनामानि कृतानि। येन वेदानधिकारिणोऽपि भावुका जना अष्टाविंशतितमेऽस्मिन् कलियुगे वेदामृतस्य पानं सौकर्येण कुर्युः।

श्रीमद्भागवते लिखितमस्ति यद् ब्रह्मादिदेवैरिन्द्रादिदिक्पालैश्च धर्मरक्षार्थं प्रार्थितेन स्वयं नारायणेन आगन्तुकस्य कलेर्मनुष्यान् अल्पायुषोऽल्पबुद्धींश्च ज्ञात्वा महर्षिपराशरद्वारा मत्स्योदरीगर्भाद् व्यासरूपेणावतीर्य पञ्चसहस्रवर्षपूर्वं चत्वारो

वेदा लेखबद्धाः कृताः।

**क्षीणायुषः क्षीणवसत्त्वान् दुर्मेधान् वीक्ष्य कालतः ।**

**ब्रह्मेशाद्यैर्लोकपालैर्ग्राचितो धर्मगुप्तये ।।०।।**

**पराशरात् सत्यवत्यामंशांशकलया विभुः ।**

**अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ।।०।।**

(श्रीमद्भागवते १२।६।४८-४९)

एवं महर्षिणा व्यासेन विकीर्णं वेदं चतुर्षु भागेषु विभज्य अध्ययनसौविध्याय सुरक्षायै च विभिन्नेभ्यः पैल-वैशम्पायन-जैमिनि-सुमन्तुभ्यः शिष्येभ्यो वितीर्णः। तदनन्तरं तेषां शिष्य-प्रशिष्य-तच्छिष्यपरम्परया वेदा अनेकशाखिनोऽभूवन्।

चतुर्णां वेदानां संकलनानन्तरं महर्षिणा व्यासेन वेदवर्णितसृष्टिप्रलयादि-प्रतिपादकमन्त्राणां संग्रहं कृत्वा आख्यानोपाख्यानगाथाकल्पशुद्धिभिर्देवर्षि-राजर्षि-महर्षिप्रभृतीनां चरित्रं सम्वादं चावश्यकतानुसारं संक्षिप्य विशद्य वा स्वकविताचातुरी-द्वारा सुगमं सरलं मनोहरं च निर्माय जागरितेतिहासस्वरूपं प्रदाय विषयक्रमेण १८भागेषु विभज्य अष्टादशमहापुराणानि अस्माकमक्षिलक्ष्यीकृतानि। एवं शतकोटि-प्रविस्तरश्लोकानां तात्पर्यं विषयविभागानुसारं मौलिकरूपणे चतुर्लक्षश्लोकेषु सम्बद्धीकरणं व्याससदृशस्यापूर्वप्रतिभाशालिनः सर्वज्ञस्य दिव्यदृष्टेः

असम्प्रज्ञातसमाधि-द्वारा प्राप्तर्तम्भरप्रज्ञासम्पन्नस्य अवतारिणो महापुरुषस्य चतुरस्रप्रतिभाया एव परिणामोस्ति। अस्यैव स्पष्टीकरणं मत्स्यपुराणे कृतमस्ति।

श्रीमद्भागवते सूतेनोक्तमस्ति यद् भगवता वेदव्यासेन यथा वेदरक्षाया भारः पैलादिभ्यः शिष्येभ्यः प्रदत्तस्तथैव पुराणेतिहासस्य रक्षाया भारो मम जनके लोमहर्षणनामके सूते निहितः। स हि षट्संख्याकान् त्रय्यारुणि-काश्यप-सावर्णि-अकृतव्रण-वैशम्पायन-हारीतनामकान् शिष्यान् प्राध्यापयत् , यचे षट् पौराणिकाः प्रोच्यन्ते----

**इतिहासपुराणानां पिता मे लोमहर्षणः ।**
**त्र्यय्यारुणिः काश्यपश्च सावर्णिरकृतव्रणः ।।०।।**
**वैशम्पायन-हारीतौ षड् वै पौराणिका इमे ।**
**अधीयन्त व्यासशिष्यात् संहितां मत्पितुर्मुखात् ।।०।।**

(श्रीमद्भागवते १२।७।५-६)

**पुराणानां प्राचीनत्वं सर्वमान्यत्वञ्च---**

भारतीयैः ऋषिभिर्महर्षि प्रणीतानां संस्कृतसाहित्यस्य ग्रन्थानां स्वाध्यायेन प्रतीयते यत् पुराणं वेदश्च भारतीयसंस्कृतेः संरक्षकौ सहोदरौ प्रहरिणौ स्तः। वेदकालत एव भारतीयैर्विशिष्टैर्विद्वद्भिः स्वस्वग्रन्थेषु महता संमानेन सह

पुराणानामुल्लेखः कृतोऽस्ति। यतो हि वेदपुराणानामैहलौकिक - पारलौकिकाभ्यु-दयसाधकानामुपदेशानां बलेनेव हिन्दुसमाजः सृष्टिकालतोऽद्यावधि सुस्थिरोऽस्ति, तथा विश्वस्मिन् सभ्यजातिषु अग्रणीवर्तते।

वेदकालत एवारभ्य संस्कृतवाङ्मयस्य सर्वमान्यानां ग्रन्थानामाधारेण पुराणानां प्राचीनतासिद्धये स्थालीपुलाकन्यायेन कियतां प्रमाणानां दिग्दर्शनमस्ति अत्यावश्यकम्। वेदब्राह्मणारण्यकोपनिषदादिषु ग्रन्थेषु पुराणानामुल्लेखः कथङ्कारं कृतोऽस्तीतीदं निम्नाङ्कितानां पङ्क्तीनां दर्शनेन सम्यक् प्रतीयते----

**वेदेषु पुराणम्---**

ऋग्वेद-यजुर्वेद-सामवेदच्छन्दोभिः सह पुराणं द्युलोकनिवासिनोदेवगणा-श्चोच्छिष्टात् (प्रलये समेषा पदार्थानामवसानेऽप्यवशिष्टात्) परमात्मन उत्पन्नाः---

**ऋचः सामानि छन्दांसि पुराणं यजुषा सह ।**
**उच्छिष्टाजज्ञिरे सर्वे दिवि देवा दिवि श्रिताः ।।०।।**

(अथर्ववेद ११।७।२५।)

**(क) सनापुराणमध्येरन् (ख)पुराणमोकः सख्यं शिवं वाम् ।**

(ऋग्वेद २।५४।९, २।५८।६)

अर्थात् (क) अथाहं सनातनपुराणमधीये (ख) हे अश्विनीकुमारौ युवयो स्थानं पुराणमस्ति, यतो हि पुराणैरेव भवतोर्द्वयोर्ज्ञानं जायते, तथा युवयोर्मित्रतया विश्वस्य महत् कल्याणं बोभवीति।

**ब्राह्मणगन्थेषु पुराणम्---**

अथ नवमेऽहनि किञ्चित् पुराणमाचक्षीत (शतपथब्राह्मणे ३।१२।१३) एवमिमे सर्वे वेदा निर्मिताः ससंकल्पाः सरहस्याः सब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वाख्याताः सपुराणाः। (गोपथब्राह्मणे २।१०)

**अरण्यकेषु पुराणम्---**

ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसीर्मेदाहुतयो देवानामभवन्। (तैत्तिरीयारण्यके २।९)

स यथाऽऽर्द्रैधाग्नेरभ्याहितात् पृथग्धूमा विनिश्चरन्ति एवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासपुराणम् विद्या उपनिषदः। (बृहदारण्यके २।४।११)

**उपनिषत्सु पुराणम्---**

यदा देवर्षिर्नारदोऽध्येतुं सनत्कुमारसमीपे गतवान् तदा तेन पृष्टं यदितः पूर्वं भवता किं किमधीतम् , तदा तेन यदुत्तरे एवमुक्तम्---

ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमथाथर्वाणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदम्। (छान्दोग्योपनिषद् ७।१।२।)

**सूत्रग्रन्थेषु पुराणम्---**

धर्मसूत्रेषु पुराणस्य विशिष्टं महत्त्वं वर्तते। केवलं साधारणेभ्यो जनेभ्य एव न हि, अपितु शासकवर्गस्यापि पुराणज्ञानमत्यावश्यकमस्ति, यतो हि पुराणं वेदोपबृंहकं साहित्यमस्ति। यानि तत्त्वानि वेदेषु अतिसंक्षिप्ततया निर्दिष्टानि सन्ति, तेषामेव विस्तारः पुराणेषु विद्यते। प्रजापालकस्य राज्ञो व्यवहारो वेद-वेदाङ्ग-स्मृति-धर्मसूत्र-पुराणेतिहासादिग्रन्थेषु सविस्तरमङ्कितोऽस्ति। इयतां शास्त्रणां ज्ञाता राजा व्यवहार-न्यायौ कर्तुं योग्योऽभिमतोऽस्ति। फलतः पुराणस्योपयोगः राज्ञो व्यवहारस्य शिक्षायै नितान्तमावश्यकमस्ति। तथाहि----

तस्य प्रजापालकस्य नृपतेश्च व्यवहारो वेदो धर्मशास्त्रम् अङ्गानि, उपवेदाः पुराणम्। (गौतमधर्मसूत्र १।१।२१।)

गौतमधर्मसूत्रे बहुश्रुतस्य परिभाषायां कथितमस्ति यद् , बहुतश्रुतः स एव भवितुमर्हति, यो हि लोकव्यवहारं वेदं वेदाङ्गानि च सम्यग् जानाति, तथा वाकोवाक्येतिहासापुराणेषु च कुशलोऽस्ति। एवं बहुज्ञतायै पुराणानां दक्षता एकमावश्यकं साधनमस्ति----

**स एव बहुश्रुतो भवति लोक-वेद-वेदाङ्गविद्**
**वाकोवाक्येतिहासपुराणकुशलः ।**[1]

अतो राज्ञः स्वव्यवहारसञ्चालनार्थं पुराणस्याध्ययनं मननं चिन्तनं तदाचरणं च नितान्तमावश्यकमनिवार्यं चास्ति।

**ब्रह्मणापि कल्पा गाथाः नाराशंसी इतिहासपुराणानि अमृतस्य कुल्याः।**[2]

**आभूतसम्प्लवास्ते सर्गजितः, पुनः स्वर्गे बीजार्था भवन्तीति**
**भविष्यपुराणम् ।**[3]

---

१- गौ०ध०सू० ८।४।६।

२- आश्वालायनगृह्यसूत्रे ३।४।

३- आपस्तम्बसूत्रे २।९४।५।

## स्मृतिग्रन्थेषु पुराणम्---

वेदाथर्वपुराणानि सेतिहासानि शक्तितः ।
जयपञ्चप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ।।०।।
वेद धर्म पुराणं च तथा तत्त्वानि नित्यशः ।
संवत्सरोषिते शिष्ये गुरुर्ज्ञानं विनिर्दिशेत् ।।०।।
स्वाध्यायं श्रावयेत् पित्र्ये धर्मशास्त्राणि चैव हि ।
आख्यानानीतिहासांश्च पुराणानि खिलानि च ।।०।।
मीमांसते च यो वेदान् षड्भिरङ्गैः सविस्तरैः ।
इतिहासपुराणानि स भवेद् वेदपारगः ।।०।।

## रामायणे पुराणम्---

एतच्छ्रुत्वा रहः सतो राजानमिदमब्रवीत् ।
श्रूयतां यत् पुरावृतं पुराणेषु मया श्रुतम् ।।०।।[१]

## महाभारते पुराणम्---

अष्टादशपुराणानि कृत्वा सत्यवतीसुतः ।
पश्चाद् भारतमाख्यानं चक्रे तदुपबृंहितम् ।।०।।[२]

---

१- वाल्मीकि रामायणे १।९।१।

२- म०भा०आ०प०।

**व्याकरणे पुराणम्---**

वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येतावच्छब्दस्य प्रयोगविषयः।

**दर्शनशास्त्रे पुराणम्---**

य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खलु इतिहासपुराणस्य धर्मशास्त्रस्य च।[१]

**ज्यौतिषे पुराणम्---**

**दिग्देशकालावरणादिभेदान्न छादको राहुरिति ब्रुवन्ति ।**

**यन्मानिनः केवलगोलविद्या तत्संहितावेदपुराणवाह्यम् ।।०।।**[२]

**नीतिशास्त्रे पुराणम्---**

**धर्मतत्त्वं हि गहनमतः सत्सेवितं नरः ।**

**श्रुतिस्मृतिपुराणानां कर्म कुर्याद् विचक्षणः ।।०।।**[३]

---

१- न्यायनदर्शनभाष्ये ४।१।६२।

२- सिद्धान्तशिरोमणौ ५६।

३- शुक्रनीतौ ४।२६४।

शुक्रनीतेरनुसारं न केवलं पौराणिकेन पञ्चलक्षणज्ञात्रा भाव्यं, किन्तु साहित्यशास्त्र निपुणेन संगीतज्ञेन मधुरस्वरभाषिणा च तेन भाव्यम्----

**साहित्यशास्त्रनिपुणः संगीतयज्ञश्च सुस्वरः ।**
**सर्गादिपञ्चज्ञाता च स वै पौराणिकः स्मृतः ।।०।।**[1]

**पञ्चदश्यां पुराणम्---**

अद्वैतवेदान्तस्य सारसंग्राहकेण श्रीमता विद्यारण्यस्वामिवर्येणनिर्मिताया-मद्वैतवेदान्तिनामपूर्वग्रन्थपञ्चदश्यां महता सम्मानेन पुराणानां पञ्चमवेदत्वं स्वीकृतमस्ति-

**सपुराणाम् पञ्चवेदान् शास्त्राणि विविधानि च ।**
**ज्ञात्वाऽप्यनात्मवित् तेन नारादोऽतिशुशोच ह ।।०।।**

एवं वैदिककालतः पञ्चदशीकालपर्यन्तं निर्मितानां मान्यानां संस्कृतग्रन्थानाम-धाररूपेण पुराणानां प्राचीनत्वं निर्विवादं सिध्यति।

---

१- शुक्रनीतौ २।१७७)

**अर्थशास्त्रे पुराणम्---**

राज्ञां शिक्षादानावसरे कौटिल्यस्य मतमस्ति यद् राजहितकर्तुः अर्थशास्त्रज्ञस्य मन्त्रिणः कर्तव्यमस्ति, यत् स इतिहासपुराणद्वारा उन्मार्गे वर्तमानं तदनुमखं वा राजानमवरोध्य सुमार्गे प्रचालयितुं प्रयासं कुर्यात्----

**मुख्यैरवगृहीतं च राजानं तत्प्रियाश्रिताः ।**
**इतिवृत्तपुराणाभ्यां बोधयेदर्थशास्त्रवित् ।।०।।**[१]

एवं कौटिल्यस्य दृष्टौ पुराणापेक्षया इतिहासस्य क्षेत्रं बहु विस्तृतमस्ति। तेन स्वकीयेऽर्थशास्त्रे पुराणस्य गणना इतिहासान्तर्गता कृताऽस्ति यथा पश्चिममितिहास-श्रवणे (५।१३) राजा दिवसस्य पश्चाद्भागमपराह्णमितिहासश्रवणे नयेत्। तत्रेतिहास-जिज्ञासायामुच्यते-----

**पुराणमितिवृत्तख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं चेतिहासः ।**[२]

वेतनभोगिनामधिकारिणां प्रसङ्गे कौटिल्यस्य कथनमस्ति यद् , राजा कार्तान्तिक (फलितज्योतिषी) नैमित्तिक-(उत्पातनिमित्तज्ञाता) मौहूर्तिक-

---

१- अर्थशास्त्र ५।६।

२- अर्थशास्त्र ५।१३।

(शुभमुहूर्तबोधकौ विद्वान्) पौराणिक (पुराणज्ञातसूत-मागध-पुरोधः-सर्पाध्यक्षेभ्य एकसहस्त्रवेतनं दत्त्वा स्व कार्याय ते नियोक्तव्याः।

कार्तान्तिक-नैमित्तिक मौहूर्तिक-पौराणिक-सूतमागधाः पुरोहितपुरुषाः सर्वाध्यक्षाश्च साहस्त्राः।

**दर्शनाचार्या पुराणश्च**

शबरस्वामिनः कुमारिलभट्टस्य श्रीस्वामिशङ्कराचार्याणां च ग्रन्थानुशीलनेन प्रतीयते, यत्तैः स्वव्याख्यासु पुराणानां यत् स्वरूपमुपस्थापितं वर्तते तद्वर्तमानपुराणेभ्यो भिन्नन्नास्ति।

(१) शबरस्वामी जैमिनिसूत्रभाष्ये यज्ञसम्बद्धदेवतास्वरूपं निर्णयन् लिखति यद् अस्मिन् विषये इतिहासपुराणे उपलब्धमेकं मतमस्ति यद् देवतया तात्पर्यमग्निना सहास्ति, यः स्वग्रे निवसति----

का पुनरियं देवता नाम। एकं तावन्मतं या एता इतिहासपुराणेष्वग्न्याद्याः सङ्कीर्त्यन्ते नासदस्ता देवता इति।

(२) कुमारिलभट्टेन स्वकीये तन्त्रवार्तिके पुराणस्वरूपे तद्विषयसम्बन्धे च महन्मूल्यवद् वृत्तमुपात्तमस्ति, येन पुराणानां प्रामाणिकता सिध्यति। पुराणेषु कलियुगविषये उक्तमस्ति यत् शाक्यप्रभृतयः (गौतमबुद्धाद्यः) उत्पत्स्यन्ते, ये धर्मविषये विप्लवमुत्पादयिष्यन्ति तेषां वचनानि कः शृणुयात्----

**स्मर्यन्ते च पुराणेषु धर्मविप्लुतिहेतवः ।**
**कलौ शाक्यादयस्तेषां को वाक्यं श्रोतुमर्हति ।।०।।**[१]

(३) स्वामिवर्यैः पूज्यपादैः श्रीशङ्कराचार्यैः स्वशारीरकभाष्ये बहुत्र पुराणानां तद्विषयाणाञ्च निर्देशः कृतोऽस्ति, तथा तेन पुराणानि अनेकत्र स्मृतिशब्देन व्यवहृतानि, पुराणे चातीतानागतानां कल्पानां च परिमाणमस्तीति स्थापितम्। (वे०सू०शां०भाष्य २।१।३६।)

अपि च

तथा सामर्थ्यमपि समभवति मन्त्रार्थवादेतिहासपुराणलोकेभ्यो विग्रहवत्त्वाद्यधिगमात् तत्रैव १।३।२६।।

---

१- तन्त्रवार्तिके १।३।७।

एवमाचार्यपादैर्ब्रह्मसूत्रभाष्ये सनतसुजातीयभाष्ये श्वेताश्वतरोपनिषदादिभाष्ये च प्रमाणरूपेण बहूनि पुराणवचनानि समुदद्धृतानि सन्ति।

अपि च राष्ट्रभाषाया हिन्द्या आविर्भावकालतोऽद्यपर्यन्तं निर्मितेषु हिन्दीसाहित्यस्य मान्यग्रन्थेषु महाकविचन्दवरदाई-सूर-तुलसी-कबीर-गुरुनानक-केशवदास-रसखान-देवकवि-भूषण-गिरिधरदास-बिहारी-प्रभृतिभिः कविभिः स्वस्वग्रन्थेषु वेदेन सहैव पुराणानामपि नाम महता समादरेण संगृहीतमस्ति। तस्मात् पुराणानां प्राचीनत्वे सर्वमान्यत्वे च न काप्यस्त्यनुपपत्तिः।

**पुराणानां महिमा---**

पुराणवाड्मयं भारतीयजीवनसाहित्यहस्यास्ति अमूल्यं रत्नं तथाऽतीतं वर्तमानेन सह संयोजयितुं स्वर्णमयी शृङ्खला। विश्वसाहित्यस्याक्षयभाण्डारेऽष्टादश-महापुराणानि अनुपमानि सर्वश्रेष्ठानि च रत्नानि सन्ति। इमानि चास्माकं सामाजिक-सांस्कृतिक-राजनीतिक-धार्मिक-दार्शनिकजीवनं स्वच्छदर्पणवत् प्रतिबिम्बितं कुर्वन्ति सहैव सरलभाषाया क्रमबद्धकथानकशैल्या च प्राचीनानि सन्त्यपि नवीनतमां स्फूर्तिं सञ्चारयन्ति।

भारतीयवाङ्मये पुराणसाहित्यस्य कृते एकं विशिष्टं महत्वपूर्णञ्च स्थानं विद्यते। धार्मिकपरम्परायां वेदानन्तरं पुराणानामेव मान्यता वर्तते। पौराणिकज्ञानस्याभावे वैदिकसाहित्यस्यार्थावबोधः सर्वथाऽसम्भवो विद्यते। यथा 'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् , समूढमस्य पांसुरे' (ऋग्वेदे १।५।२२।१७) अस्य मन्त्रस्यार्थो न सायणादिभाष्येरपि सम्यक् स्पष्टीभवति, यद् विष्णुना कदा कथं केन प्रकारेण वा विश्वमिदं त्रिभिः पदैः मापितम् ? किन्तु पुराणेषु यदा वलिवामनकथया मन्त्रार्थस्यास्य विवरणं सम्यगुपलभ्यते तदा सन्देहस्य कश्चनावसरो न तिष्ठति। यथा वा 'नमो नीलग्रीवाय' (यजुर्वेदे १६।२८) इति मन्त्रस्यार्थो महीधरेण स्वभाष्ये कृतोऽस्ति यद् विषीक्षणान्नीलं जातं कण्ठं यस्य तस्मै शिवाय नमः, परन्तु अनेन भाष्यार्थेन न स्पष्टं जायते यच्छङ्करेण कदा कथं केन प्रकारेण विषभक्षणं कृतम् ? किन्तु पुराणेषु समुद्रमन्थनप्रसङ्गे अस्य समाधानं सम्पूर्णरूपेण जायते। अतः पौराणिकसाहाय्यं विना वेदानां गूढार्थस्य समाधानं न सम्भवति। सूत्ररूपस्य वेदस्य भाष्यभूतं पुराणामर्थ-परकं भूत्वा तदुपयोगित्वं नितरां वर्द्धयति।

विश्वस्मिन् विद्यमानेषु ग्रन्थेषु भारतीयैः सुरक्षितौ वेदराशिः परमप्राचीनोऽस्तीत्यत्र न कापि विप्रतिपत्तिः। अतः स कदा प्रादुर्भूतः केन वा प्रणीत इति विषये सुनिश्चितं न किमपि वक्तुं शक्यम्। भारतीयास्तु वेदोऽनादिरपौरुषेयश्चेति श्रद्दधते। अनादिशब्देन प्रारम्भ समयाभावः, अपोरुषेयपदेन च पुरुषकर्तृत्वाभावो

बोध्यते। एवञ्चेश्वरवन्नितयं दोषरहितं स्वतः प्रमाणञ्च वेदजातमति भारतीयानामस्ति विश्वासः।

अति प्राचीनकालतः समयातेऽपि वेदजाते आकाशि काशमीरं यावत् , हिमालयतः कन्याकुमारीपर्यन्तं च पाठभेदाभाव आश्चर्य जनयति सुविचारकाणां विपश्चितां चेतस्सु। अतो वेदरक्षकाणां परमतपस्विनां ब्राह्मणानां महती प्रशंसा परमा प्रतिष्ठा च प्रचलति प्राचीनकालत एव। तैस्तु सपरिश्रमं पदघनक्रमादिविकृति-द्वारा महत्ता प्रयत्नेन दृढया निष्ठया नेकानि कष्टानि सोढ्वापि वेदाज्ञा राजाज्ञेवाद्य यावत् परिपाल्यते। भारते प्राचीनकालतः प्रणीतानां सर्वविषयकशास्त्राणां साक्षात् परम्परया वा वेद एव मूलत आश्रयो विद्यते।

विदन्ति जानन्ति प्राप्नुवन्ति वा धर्मार्थकाममोखानेभिरिति वेदा इति व्युत्पत्त्या 'विद्ज्ञाने' 'विद्लृलाभे' वा इति धातोः 'हलश्च' (३।३।१२१) इति पाणिनीयसूत्रेणा करणाघञा वेदशब्दो निष्पद्यते। एवञ्च वेदशब्दस्य मुख्योऽर्थो ज्ञानं परन्तु ज्ञानप्रदानां ग्रन्थानामपि वेदसंज्ञेति व्यवहारः। वेदलक्षणावर्णनप्रसङ्गे भगवता सायणाचार्येणापि 'इष्टप्राप्त्यनिष्ठपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः' इति प्रत्यपादि। अत एवोक्तं तन्त्रवार्तिके कुमारिलभट्टेन----

प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।

एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता ।।०।।

प्रामाण्यविवेचनप्रसङ्गे वेदानां स्वतः प्रामाण्यमितरेषां शास्त्राणां तु वेदमूलकत्वेन प्रामाण्यमिति मीमांसायां तत्र तत्र प्रपञ्चितमस्ति। निखिलभूमण्डलनस्य वाङ्मयं वेदराशिर्मूर्द्धाभिषिक्त इति नातितिरोहितं विपश्चिदपश्चिमानाम्। तत्कारणञ्च वेदानामपोरुषेयत्वमेव। तदुपबृंहणार्थं यानीतिहासपुराणानि समुपलभ्यन्ते, तेष्वपि मनसो विमुग्धकरमपूर्वं ज्ञानं विज्ञानञ्च संगृहीतं वर्तते, यज्जिघृक्षवः सहृदया अहर्निशं कृतभूरिपरिश्रमा अपि पारं गन्तुमक्षमाः तीरे एवावतिष्ठन्ते। अतो वेदपुराणयोः समन्वयपूर्वकानुशीलानाभ्यासो नितरामपेक्ष्यते।

## पुराणानां वेदमूलकत्वम्---

मनुष्यो महानपि बुद्धिमान् कथं न स्यात् , किन्तु तस्मिन् भ्रमप्रमादादीनां सम्भावना भवत्येव। अत एव मानवरचितं ग्रन्थमधीत्य निर्भ्रान्तं पूर्णं च ज्ञानं नार्हति। वेदा न केनापि मनुष्येण रचिता नापीश्वरेणा निर्मिताः सन्ति, किन्तु परमेश्वरनिः श्वासवन्नित्या अनादयोनन्ता अपौरुषेयाश्च सन्ति। प्रलये परमेश्वरेऽन्तर्हिताः ते सृष्टिसमये ईश्वरस्य निःश्वासरूपेणा निःसरन्ति। सर्वप्रथमं ब्रह्मा वेदानां ज्ञानं प्राप्नोति। तथाच श्रुतिः-- 'यो ब्राह्मण विदधाति पूर्वं यो वे वेदांश्च प्रहिणोति तस्मै (श्वे०उ० ६।१८) पराशरस्मृतिरपि----

**न कश्चिद् वेदकर्ता स्याद् वेदस्मर्ता चतुर्मख ।**

**वेदो नारायणः साक्षात् वयम्भूरिति शुश्रुमः ।।०।।**

प्रादौ ब्रह्मणा वेदग्रहणानन्तरं य ऋषिः यादृशीं तपस्यां कुरुते तस्य समाती तदनुरूप एव वेदस्यांशः प्रादुर्भवति। ततः स ऋषिः स्वशिष्यं वेदं शिक्षयन्ति, सोऽपि स्वं शिष्यं शिक्षयतीत्येवं शिष्यप्रशिष्यतच्छिष्याणामविच्छिन्नया गुरुशिष्यपरम्परया अद्यत्वेऽपि वेदानां प्रचारः प्रसारश्च बोभवीतितमाम्[१]

वेदा न केनापि पुरुषेणा प्रणीताः सन्ति, अतस्तेऽपौरुषेयाः प्रोच्यन्ते अपौरुषेयं वाक्यं वेद मीमांसकाः, पुरुषे हि भ्रमः प्रमादो विप्रलिप्सा करणापाटवञ्चेति दोषचतुष्टयं सम्भाव्यते। अतो वेदस्यापौरुषेयत्वादेव तत्र पूर्वोक्तदोषचातुर्विध्यस्य नेषदपि प्रसक्तिरस्ति, अपि च तेषां नित्यत्वं सिध्यति।

---

१- (क) ऋषीणां ताप्यतां तेषां तपः परमदुर्लभम् ।
मन्त्राः प्रादुर्भवन्त्यादौ पूर्वमन्वन्तरस्य च ।।०।। (मत्स्यपुराणे १४४।६२)

(ख) त एते ऋषयो वेदं स्वं स्वं व्यसन्ननेकधा ।
शिष्यैः प्रशिष्यैः तच्छिष्यैर्वेदास्ते शाखिनोऽभवन् ।।०।। (श्रीमद्भागवते १।४।२३)

(ग) युगान्तेऽनतहितान् वेदान् सेतिहासन् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ।।०।। (वेदचयने २)

(घ) भर्तृहरिरप्याह वाक्यपदीये---
प्राप्त्युपायोऽनुपकारश्च तस्य वेदो महर्षिभिः ।
एकोऽप्यनेकवर्त्मेवसमाम्नातः पृथक् पृथक् ।।०।। (२।११)

ईश्वरानिः श्वासवद् अबुद्धिपूर्वकोत्पन्नवेदवद् बुद्धिपूर्वकनिर्मितशास्त्राणां प्राबल्यं नहि मन्तुं शक्यते, यतो हि वेदानामबुद्धिपूर्वकोत्पन्नत्वादपौरुषेयता विद्यते। अन्येषु शास्त्रेषु नेदं सम्भवति, तानि हि बुद्धिप्राभवत्वात् सम्भावितैर्भ्रमादिभिः पुरुषाश्रितैर्दोषैर्दूषितानि भवितुमर्हन्ति। तस्मादत्र वेदे न भ्रमप्रमादादीनां दोषाणां कापि समभावना विद्यते। वेदा एव सर्वश्रेष्ठानि निर्भ्रान्तज्ञानसाधनानि सन्ति। अपौरुषेयत्वादेव वेदाः समस्तपुन्दोषशङ्काकलङ्कपङ्करहिता मन्यन्ते। वेदानामभ्रान्तत्वात्तद्विज्ञ नमपि सर्वाङ्गपूर्णामभ्रान्तञ्च विद्यते।

पुरा द्विजबालका उपनयनसंस्कारानन्तरं ब्रह्मचर्यपूर्वकं चिरकालं गुरुगृहे उषित्वा वेदान् अभ्यस्यन्ति स्म। ततो वेदार्थमवगन्तुं शिक्षाकल्प-व्याकरण-निरुक्त-ज्यौतिषच्छन्दसां षण्णां शास्त्राणामध्ययनं कुर्वन्ति स्म। एवं महता परिश्रमेणा वेदानां वास्तविकोऽर्थोऽवगम्यते। तथा च निष्कामभावनापूर्वकं वैदिकानां कर्मणामनुष्ठानेन यदा अन्तःकरणं निर्मलं भवति तदैव निर्मले मनसि वास्तविकं ब्रह्मज्ञानं सम्भवति। एतदभिप्रेत्यैवोक्तम् पातञ्जले-महाभाष्ये पस्पशाह्निके-- 'ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च।'

एवञ्च भगवतः श्रीमन्नारायणास्यादिपुरुषस्य नाभिकमलोद्भवेन चतुर्मुखेन ब्रह्मणा नारायणोपदिष्टां वेदविद्यां स्मारं स्मारमृषिभ्यः सा प्रादायि। ते च तपः पूतान्तः करणाः। शिष्यानध्यापयन् ते च स्वशिष्यपरम्परया लोके वेदान् प्रसारयामासुः प्रचारयामासुश्च। तथा च ब्राह्मणादिचातुर्वर्ण्यस्य ब्रह्मचर्यादिचतुराश्रमकदम्बस्य च निखिला अपि कार्यकलापा वेदेभ्य एव सम्पादिताः। अतो देवपितृमानवानां हव्यकव्यान्नदानेषु वेदानां नेत्रत्वप्रतिपादनपूर्वकमेषां महत्त्वमपि सम्यगभिहितं मनुस्मृतौ-

**पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम् ।**
**अतर्क्यञ्चाप्रमेयञ्च वेदशास्त्रमिति स्थितिः ।।०।।**

तस्मादिमे वेदाः परमपुरुषार्थसाधनहेतवः परमनिः श्रेयससम्पादकाश्च द्विजातीनामिति निर्विवादम्। अतो वेदशास्त्राभ्यासशालिनं ब्रह्मोचितकर्मकारिणञ्च द्विजोत्तमं न स्पृशन्ति महापातकराशयोऽपि जातुचिन् निर्मलकमलदलमिव तोयराशयः। भगवता मनुनापि मनुस्मृतौ तप पुरः, परं वेदाभ्यास एव ब्राह्मणानां कृते प्रकृष्टं तपः प्रोक्तमस्ति।

एवं नित्यं नित्यकृत्यावसरे श्रेयाहेतुतया प्रणव-गायत्र्यादिजपपूर्वकं वेदस्यानलसं यथा स्यात्तथा स्वाध्यायं द्विजातीनां श्रेष्ठतमं धर्म मन्वादयो महर्षयो मन्वते। इतोऽन्य उपधर्मोऽपकृष्टो वा धर्मो मुनिभिरुच्यते।

अपि च सकलशास्त्रविज्ञानामपि वेदानुशीलनहीनानां ब्राह्मणानां वचनस्याग्राह्यत्वम-श्रद्धेयत्वञ्च प्रतिपादितम्।

वेदानामनभ्यासपुरस्सरमन्यासच्छास्त्राभ्यासश्रमिणां द्विजातीनां शास्त्रेषुनिन्दापि श्रूयते, न स ब्राह्मण उपदेष्टुमर्हतियो हि वेदानतिक्रम्यान्येषु केषुचिच्छास्त्रेषु कालक्षेपं विदधाति। न केवलं गर्हणीय एव स यो वेदमपहायान्यत्राचरित श्रमम् , प्रत्युत् सान्वयो जीवन्नेव शूद्रत्वं प्राप्नोति। वेदभ्यासेन सर्वमपि कामनाकदम्बकमनायासेन साधितं भवतीति न केवलं वचोवैलक्षण्यमात्रमपि तु शास्त्रकारैः सम्यगभ्यस्यानुभूयच सध्रीचीनेन ज्ञानेनोट्टङ्कितम् 'यं यं कामयते कामं तं तं वेदेन साधयेत्'। इत्थं सर्वशास्त्रसिद्धान्तसिद्धं वेदस्योपादेयत्वं ब्राह्मणानां सकलशास्त्रसम्मतम्।

तस्माद्वेदायासस्यैवापूर्वबोधकत्वेन सर्वविधधर्मसम्पादनसमाधानत्वेनात्मज्ञानोद्बो-धकत्वेनच परमात्मसाक्षात्कारद्वारा मोक्षहेतुत्वमिति साधीयानस्ति पन्थाः।

व्यासवाल्मीकिप्रभृत्यां महर्षयोऽलौकिक तपस्यां कृत्वा परमात्मनोऽनुकम्पया वेदानां यथार्थमर्थं ज्ञात्वा तत्प्रचारस्यावश्यकतामनुभूतवन्तो यत् साधारणजना अधिकसमयपर्यन्तं गुरुगृहे स्थातुं न शक्नुवन्ति, नापि वेदार्थमवगन्तुं सब्रह्मचर्य तादृशं कठिनं परिश्रमं कर्तुं प्रभवन्ति। अतः तादृशानां जानानां कृते वेदानां

निगूढमर्थं सम्यगवन्तुं ते सरसायां सुबोधायां सरलायां सुरुचिपूर्णायाञ्च संस्कृतभाषायां रामायणं महाभारतं पुराणानि च व्यरचयन्।

अत्र त्रिभिरेभीः रामायणेन महाभारतेन पुराणांश्च वेदानां यथार्थमर्थमवगन्तुं यत्नो विधेयः।[१] एवञ्च वेदेषु ये विषयाः सूक्ष्मरूपेण प्रतिपादिताः सन्ति त एव पुराणेतिहासेषु विस्तृतरूपेण प्रपञ्चिताः सन्ति। ये च पुराणादीनामध्ययनं विना वेदानामर्थमवगन्तुं चेष्टन्ते, तेषां वास्तविकं वेदार्थज्ञानमसम्भव प्रतिभाति। यतो हि एकस्यैवाखण्डस्य सार्वजनीनस्य धर्मस्य निखिललोककल्याणाकारिण्या भारतीयसंस्कृतेश्च भारतीयसंस्कृतेश्च परिपुष्टये वेदा रामायणं महाभारतं पुराणानि च प्रवर्तन्ते। अत एव पौराणिकमहत्वप्रतिपादने सोपष्टम्भं पुराणानामुद्घोषोऽस्ति- 'यद् यो द्विजः साङ्गान् सोपनिषदश्चतुरो वेदान् जानाति, किन्तु यदि स पुराणं सम्यक् न जानाति, किन्तु यदि स पुराणं सम्यक् न जानाति तर्हि स विचक्षणो भवितुं नार्हति।

---

१- इतिहासपुराणाभ्यां वेदं समुपवृंहयेत् ।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति ।।
(म०भा०आदिपर्वणि १।२६८)

यदा भूमण्डलस्य समस्ता जातयो भोजनपानशयनसन्तानोत्पादनातिरिक्तं किमपि न जानन्ति स्म तस्मिन् घोरान्धकारसमयेऽपि सभ्यताया ज्योतिः प्रज्वालका आर्याणां वेदा एव सन्ति। देशीया विदेशीयाश्च सर्वे विद्वांस एकेन स्वरेणा स्वीकुर्वन्ति यद् ऋग्वेदात् पूर्वं किमपि अन्वेषणां कृतवन्तः तत्सर्वं वेदे सूक्ष्मरूपेण विद्यत एव। तेषामेव वेदार्थानां सुगमतया सविस्तरं ज्ञानाय पुराणानामाविर्भावोऽभवत्।

आदिदेवो हि नारायणो द्वापरे पराशरात् सत्यवत्यां व्यासरूपेणावतीर्य पुराणानि रचयाञ्चकार। तथा च वेदस्यानेकशाखाभिरनेकवर्त्मतया गूढार्थतया च तो नैव सर्वेषां जनानां यथावद् ज्ञानं सुशकमिति भगवता वेदव्यासेन सुगमतया वेदानुगततत्त्-दर्थाभिधायकानि अष्टादश पुराणानि उपनिबद्धानीति भावः।

वेदे गूढतया वर्णितानामर्थानां यावत् सुरुचिपूर्णतया शैल्या वर्णनं न क्रियते, तावत् पुराणानां निर्माणस्य प्रयोजनं पूर्णं न भवितुमर्हेत्। अत एव आख्यानोपाख्यानगाथाकल्पशुद्ध्यादिभिस्तेषां वेदार्थानां विस्तारं पुराणद्वारा कृतवान् पुराणतत्त्वनिपुणो भगवान् व्यासदेवः।

वेदविज्ञानस्य मनोरञ्जकेषु आख्यानादिषु परिणतीकरणं पुराणानामपूर्वं कौशलं विद्यते। वेदानां वास्तविकं रहस्यमवगन्तुं प्राचीनाख्यानोपाख्यानादिवर्णनव्याजेन विविधानुपदेशान् दातुं विभिन्नानां विषयाणामुत्कटलालसां परिहायान्तः करणं भगवदुन्मुखं विधातुं च यासामैतिहासिकघटनानामुल्लेख आवश्यकोऽस्ति, पुराणेषु तासामेव विशेषतः वर्णनं विद्यते। सर्वासां पौराणिकीनां कथानां मूलं वेदा एव विद्यन्ते। पुराणेषु यत्किमपि लिखितं वर्तते तत्सर्वं वेदमन्त्राणां विस्तृता व्याख्याऽस्ति। यथा-- 'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्' (ऋग्वेदे १।१२।२७) इत्यादिना वर्णितवामनावतारकथा वामनादिपुराणेषु विस्तरेण वर्णिता विद्यते। कस्या अपि आख्यायिकायास्सविस्तरं वर्णनं वेदस्योद्देश्यन्नास्ति, किन्तु वेदे कस्मिंश्चिदुद्देशे या कथातिसंक्षेपेण निर्दिष्टाऽस्ति सैव पुराणेषु विस्तृताख्यायिकारूपेण वर्णिता विद्यते। यतो हि साधारणेषु मनुष्येषु कौतुहलपूर्वकं भगवद्भक्त्युत्पादनं पौराणिकीनामाख्यायिकानां प्रमुखं लक्ष्यमस्ति। यथा शिवपुराणश्रीमद्भागवतादिपुराणेषु जगन्मातुः गिरिराजकुमार्या भगवत्याः पार्वत्या उमारूपेणा जन्मग्रहणकथा दृश्यते। केनोपनिषदि च ब्रह्मविद्याया हैमवत्या उमारूपेण प्राकट्यं प्रतिपादितमस्ति। यद् यथा-ह्यस तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम् तां होवाच किमेतद् यक्षमिति। यथा वा अथर्ववेदे महाराजस्य पृथोः पृथ्वीदोहनं संक्षेपेणा वर्णितमस्ति, परं श्रीमद्भागवते तदेव सविस्तरं वर्णितं विद्यते। यतो हि वेदा नोपाख्यानमूलका सन्ति। अतः तेषु स्थलविशेषे एवोदाहरणारूपेणोपाख्यानमस्ति, किन्तु पुराणेषू-

पाख्यानानामेकत्र समावेशो जातोऽस्ति। अत एव पुराणेषूपाख्यानानामाधिक्यं विस्तारश्च दृश्यते। वेदाः पुराणानि चैकस्य सनातनधर्मस्याभिवृद्धये लोककल्याणाय च विभिन्नकाले आविर्भूता महाग्रन्था मन्यते। विषयदृष्टया पुराणेषु वेदात् किमपि पार्थक्यं नास्ति। यदि भिन्नता समुपलभ्यते तर्हि उभयोर्वर्णानपद्धतावेव। पुराणानां वेदमूलकत्वादेव स्कन्दपुराणे प्रोक्तमस्ति यद् वेदे यन्निर्दिष्ट वर्तते तत्तत्स्मृतिषु अप्युपदिष्टं विद्यते, उभाभ्यां यत् प्रतिपादितमस्ति तदेव पुराणेष्वपि सद्दृष्टान्त विस्तरतो गीतमस्ति। तस्माद् वेदार्थानां विवरणाद्वेदपुराणयोरैक्यं निर्बाधं सिध्यति।

**महापुराणानां क्रमः**

देवीभागवते पुराणगणनाप्रसङ्गे महापुराणानां त्वेवं क्रमो विहितः। यथा----

म-अक्षरे पुराणद्वयम् -(१) मत्स्यपुराणं (२) मार्कण्डेयपुराणञ्च।

भ-अक्षरे पुराणद्वयम् -(१) भागवतपुराणं (२) भविष्यपुराणञ्च।

ब्र-अक्षरे पुराणद्वयम् -(१) ब्रह्म, (२) ब्रह्मवैवर्त (३) ब्रह्माण्डपुराणमिति।

व-अक्षरे पुराणद्वयम् -(१) वायु, (२) वामन, (३) वाराह, (४) विष्णुपुराणम्।

अ-अक्षरे एकम् -(१) अग्निपुराणम्।

ना-अक्षरे एकम् -(१) नारदपुराणम्।

| | |
|---|---|
| प-अक्षरे एकम् | -(१) पद्मपुराणम्। |
| लिं-अक्षरे एकम् | -(१) लिङ्गपुराणम्। |
| ग-अक्षरे एकम् | -(१) गरुडपुराणम्। |
| कू-अक्षरे एकम् | -(१) कूर्मपुराणम्। |
| स्क-अक्षरे एकम् | -(१) स्कन्दपुराणम्। |

अतिसरलतया महापुराणानां नामगणनाक्रमविधायकश्लोको यथा----

**म-द्वयं भ-द्वयं चैव ब्र-त्रयम् व-चतुष्टकम्।**

**अ-ना-प-लिं-ग-स्कू-स्कानि पुराणानि प्रचक्षते ।।०।।**

**ब्रह्माण्डपुराणे---**

(१) ब्रह्मपुराणं, (२) पद्मपुराणं, (३) विष्णुपुराणं, (४) वायवीयपुराणम् (५) भागवतपुराणं, (६) नारदपुराणं, (७) मार्कण्डेयपुराणं, (८) अग्निपुराणं, (९) भविष्यपुराणं, (१०) ब्रह्मवैवर्तपुराणं, (११) लिङ्गपुराणं, (१२) वाराहपुराणं, (१३) स्कन्दपुराणं, (१४) वामनपुराणम्, (१५) कूर्मपुराणम्, (१६) मत्स्यपुराणम्, (१७) गरुडपुराणम्, (१८) ब्रह्माण्डपुराणमिति।

**नारदीयपुराणे---**

(१) ब्रह्मपुराणं, (२) पद्मपुराणं, (३) विष्णुपुराणं, (४) वायवीयपुराणम् (५) भागवतपुराणं, (६) नारदीयपुराणं, (७) मार्कण्डेयपुराणं, (८) अग्निपुराणं, (९) भविष्यपुराणं, (१०) ब्रह्मवैवर्तपुराणं, (११) लिङ्गपुराणं, (१२) वाराहपुराणं, (१३) स्कन्दपुराणं, (१४) वामनपुराणम् , (१५) कूर्मपुराणम् , (१६) मत्स्यपुराणम् , (१७) गरुडपुराणम् , (१८) ब्रह्माण्डपुराणमिति।

**उपपुराणविवेचनम्---**

अष्टादशमहापुराणवत् महर्षिणा वेदव्यासेन अष्टादश उपपुराणमपि निर्मापितम्। तद्यथा।

(१) आदिपुराणम् , (२) नरसिंहपुराणम् , (३) स्कन्दपुराणम् , (४) शिवधर्मपुराणम् , (५) दुर्वासः पुराणम् , (६) नारदीयपुराणम् , (७) कपिलपुराणम् , (८) वामनपुराणम् , (९) औशनसपुराणम् , (१०) ब्रह्माण्डपुराणम् , (११) वरुणपुराणम् , (१२) कालिकापुराणम् , (१३) महेश्वरपुराणम् , (१४) शाम्बपुराणम् , (१५) सौरपुराणम् , (१६) पराशरपुराणम् , (१७) मारीचपुराणम् , (१८) भास्करपुराणश्चेति।

औपपुराणविश्लेषणम्---

(१) सनत्कुमार पुराणम् (२) वृहन्नारदीयपुराणम् (३) आदित्यपुराणम् (४) सूर्यपुराणम् (५) नन्दिकेश्वरपुराणम् (६) कौर्मपुराणम् (७) भागवतपुराणम् (८) वसिष्ठपुराणम् (९) भार्गवपुराणम् (१०) मुद्गलपुराणम् (११) कल्किपुराणम् (१२) देवीपुराणम् (१३) महाभागवतपुराणम् (१४) वृहद्धर्मपुराणम् (१५) परानन्दपुराणम् (१६) वह्निपुराणम् (१७) हरिवंशपुराणम् (१८) पशुपतिपुराणम्।

एवं श्री स्वामिना ज्ञानानन्दसरस्वती महोदयेन स्वकीये धर्मकल्पद्रुमे अष्टादशानां औपपुराणानामपि संकेतः कृतोऽस्ति। तन्मते पञ्चप्रकारकाणि पुराणानि सन्ति।

(१) पुराणानि (महापुराणानि) (२) उपपुराणानि (३) औपपुराणानि (४) अपोपपुराणानि (५) उपौपपुराणानि ।इति।

केचित्तु----

पुराणानां मुख्यतया पञ्चभेदाप्रकल्पिताः। तन्मते----

(१) महापुराणानि (२) पुराणानि (३) उपपुराणानि (४) पुराणसंहिता (५) इतिहासश्च। तत्र महाभारते इतिहासलक्षणोपेतमतपि कर्मोपासना ज्ञानात्मककाण्ड-

त्रयरहस्यपूर्णत्वात् सर्वांगपूर्णं पुराणमङ्गी क्रियते।

पुराणानि च लौकिकेतिहासरूपाणि नापि कल्पितगाथापूर्णानि। वस्तुतः पुराणानि ज्ञानस्यास्य त्रिकालदर्शिनो वेदस्य भाष्य रूपाणि।

अतएव सर्वे मन्त्राः पुराणानाञ्च सर्वे विषयाः अपि प्रायः भावत्रितयात्मकाः।

'पुराणानां प्रतिपाद्यार्थाः'

**पुराणानां विषयाः---**

पुराणानां कानि सन्ति स्रोतांसि येषामाधारेण भगवता व्यासदेवेन तेषां प्रणयनं कृतमिति जिज्ञासायामिदमुच्यते यत् पुराणतत्त्ववेत्ता महर्षिवेदव्यासः चतुर्णाम् आख्यानानां उपाख्यानानां, गाथानाम् , कल्पशुद्धीनां चोपकरणानां आशयमादाय अष्टादशपुराणानि विरचयाञ्चकार। यथा----

**आख्यानैश्चाप्युपाख्यानैः गाथिभिः कल्पशुद्धिभिः ।**
**पुराण-संहितां चक्रे पुराणार्थं विशारदः ।।०।।[१]**

---

१- विष्णुपुराणे ३।६।१५।

तत्र स्वयं दृष्टार्थकथानकमाख्वयानमुच्यते, परम्परया श्रुतं कथानकमुपाख्यानमाख्यायते। तद्यथा-----

**स्वयं दृष्टार्थकथनं प्राहुराख्यानकं बुधाः ।**
**श्रुतंस्यार्थस्य कथनमुपाख्यानं प्रचक्षते ।।०।।**[१]

अर्थात् यस्यार्थस्य साक्षात्कारः स्वयं वक्त्राकृतोऽस्ति तदाख्यानं निगद्यते। यस्य चार्थस्य कथनं वक्त्रा अन्य व्यक्तिद्वारा श्रुतं विद्यते तदुपाख्यानं कथ्यते। एतदनुसारं मर्यादापुरुषोत्तमस्य श्रीरामचन्द्रस्य, सत्यव्रतस्यराज्ञो हरिश्चन्द्रस्य धर्मिष्ठस्यराज्ञो ययातेश्च कथानकं यस्य केवलं परम्परा श्रुतमस्ति, तद् रामोपाख्यानं हरिश्चन्द्रोपाख्यानं, ययात्युपाख्यान् च उच्यते।

केषाञ्चिदविदुषां मतभेदोऽयं न दृष्टश्रुतकारको कारणविद्यते, अपितु महदल्पाकारको वर्तते। आकारे यत् कथानकं महदस्ति तदाख्यानं निगद्यते। अपेक्षाकृतं स्वल्पाकारकम् कथानकमुपाख्यान नाम्ना प्रसिद्धः। यथा--- रामायणे रामस्य कथानकं व्यापित्वादाख्यानमुच्यते। तदेकदेशवर्तित्वात् सुग्रीवस्य कथानकमुपाख्यानं कथ्यते।

---

१- अष्टादशपुराणदर्पणे २५।

आज्ञातकर्तृकाणां लोकप्रख्यातानां केषाञ्चिन्महापुरुषाणाम् वैशिष्ट्यबोधकानां श्लोकानां संज्ञा गाथा अस्ति। प्राचीनसाहित्येषु अनेकानि एवं विधानि प्राचीनानि पद्यानि समुपलभ्यन्ते, येषां कर्तृणा नामानि नोपलभ्यन्ते। यानि केषाञ्चि महामान्यमहीपतीनां प्रशंसायामसामान्ये शौर्ये दानमहिम्नि च प्रतिपादितानि सन्ति। ईदृशा अज्ञातकर्तृकाः परम्परया प्रचलितालोकप्रख्याताः श्लोका गाथापदेनोच्यन्ते। पुराणगाथासु केषाञ्चिन्महापुरुषाणां सार्वभौमं जीवदर्शनं संक्षेपतः एकस्मिन् द्वयोर्वाश्लोकयोरभिव्यक्तीकृतमस्ति। अधिकांशतः इमा गाथा भारतीयसाहित्येषु अतीतकालतः सम्बद्धा सन्ति। तथैतिहासिकव्यक्तीनां दानमहत्वाभिषेकादीनां वर्णनं कुर्वन्ति। तथा च महाभारते ययाति गाथा----

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ।।०।।
यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
एकस्यापि न पर्याप्तं तस्मात्तृष्णां परित्यजेत् ।।०।।

**वायुपुराणे पितृगाथा यथा---**

एष्टव्या बहवः पुत्रा यद्येको पि गाथां व्रजेत् ।
यजेत नाश्वमेधेन नीलं वा वृषमुत्सृजेत् ।।०।।
गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति ।
गयाप्राप्तं सुतं दृष्ट्वा पितृणामुत्सवो भवेत् । इति।

मत्स्यपुराणे मनुमत्स्यसंवादप्रसङ्गे पितृगाथामुक्तमस्ति। यथा---

अपि स्यात् स कुले स्माकं यो नो दद्यात् जलाञ्जलिम् ।
नदीषु बहुतोयासु शीतलासु विशेषतः ।।०।।[1]

विष्णुपुराणे सप्तर्षिगाथा-कार्तवीर्यगाथा च---

तत्रापि श्रूयतेश्लोको गीतः सप्तर्षिभिः पुरा ।
खड्वाङ्गेनसमो मान्यः कश्चिदुर्व्या भविष्यति ।।०।।
नूनं न कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः ।
यज्ञैर्दानैस्तपोभि र्वा प्रश्रयेण दमेन च ।।०।।[2]

कल्पशुद्धिः---

कल्पशुद्धिशब्दस्य तात्पर्यनिर्णये विदुषांमतमस्ति पारस्परिकोभेदपरकः। केचन कल्पशुद्धिशब्दस्थाने कल्पजोक्तिरितिपाठं मत्वा विभिन्नेषु कल्पेषु उत्पद्यमानानां पदार्थानां विवरणमित्यर्थं कुर्वन्ति। श्रीधरस्वामिना तु कल्पशुद्धित्यस्यार्थः श्राद्धकल्प

---

१- मत्स्यपुराणे २०३।३।

२- विष्णुपुराणे ४।४।३८-४०।

इति कृतोऽस्ति। समीक्षा चक्रवर्तिनः पं० मधुसूदनोझामहोदयानां तथा म०म०पं०गिरिधरचतुर्वेदानां मते कल्पशुद्धिशब्देन धर्मशास्त्रस्य सर्वे विषयाः अभीष्टाः सन्ति। कल्पस्य तात्पर्य तौ वेदाङ्गम् मन्येते।

अत्र श्रौत-गृह्य-धर्मसूत्र-सदाचार-संस्कारान्तर्भवन्ति। शुद्धिपदेन तौ षड्विधां शुद्धिं मन्यन्तो। तथाहि----

(१) मलशुद्धिः (२) स्पर्शशुद्धिः (३) अघशुद्धिः (४) एनः शुद्धिः (५) आत्मशुद्धिः मनशुद्धिः इति।

तथा च भगवताव्यासदेवेन पुराणनिर्माणावसरप्रतिसर्गे एषां चतुर्णां आख्यानोपाख्यानगाथाकल्पशुद्धीनां सम्यगुपयोगः कृतोऽस्ति। अत इमानि सन्ति पुराणां स्रोतांसि, उपकरणानि, उपादानानि वेत्यत्र नास्ति काचित् संशीतिः। स्कन्दपुराणानुसारं पुराणेषु पञ्चलक्षणातिरिक्तो यावान् विवेच्यो विषयो विद्यते तावान् आख्यानपदेन प्रसिद्धोऽस्ति। यथा

**पञ्चाङ्गानि पुराणस्य चाख्यानमितरत् स्मृतम् ।**[१]

---

१- स्क०पु० प्र०ख० ७।७४।

किन्तु मत्स्यपुराणानुसारम् पञ्चलक्षणमेवाख्यानकमुच्यते । यथा---

**पञ्चाङ्गानि पुराणेषु आख्यानकमिति स्मृतम् ।।**[१]

**पुराणेतिहासः---**

पुराणसाहित्यस्येतिहासेन सहास्ति घनिष्ठः सम्बन्धः प्राचीनग्रन्थेषु द्वयोर्नाम सम्मिलितरूपेणोलभ्यते। छान्दोग्योपनिषदि इयं कथास्ति यत्-- एकदा यदादेवर्षि-र्नारदोब्रह्मविद्यामध्येतुं सनत्कुमारपार्श्वे उपस्थितस्तदा तेन पृष्टो यद् भवता इतः पूर्वं किं किमधीतमस्ति ? तदुत्तरे स स्वाधीत विधासु इतिहासपुराणयोर्नामम गृहीत्वा तत् पञ्चमं वेदं प्रोवाचद्----

**ऋग्वेदं भगवो ध्येमि यजुर्वेदं सामवेदमप्यथर्वाण ।**
**मितिहासपुराणं पञ्चमं वेदानां वेदम् ।।**[२]

न्यायभाष्ये वात्स्यायनेनापि विषयभेदात् साहित्यस्य त्रयो भेदाः स्वीकृताः सन्ति। (१) यज्ञ (२) लोकचरितम् (३) व्यवहारव्यवस्थापनं च। एषु मन्त्र-ब्राह्मणातमकस्य वेदस्य विषयः। लोकचरितम् इतिहासपुराणानां विषयः। तथा व्यंवहारव्यवस्थापनम् मानवानां पुण्यपापादीनां निर्धारणञ्च धर्मशास्त्रस्यास्ति विषयः।

---

१- म०पु० ५३।६४।

२- छान्दो० उ० ७।१।१४।

वस्तुतो द्रष्टुः प्रावक्तुश्च दृष्ट्या एषु भेदो नास्ति। यतो हि ते एव मन्त्राणां द्रष्टारः। इतिहासपुराणस्य, धर्मशास्त्रस्य च द्रष्टारो, वक्तारश्च सन्ति। किन्तु विषयविवेचन दृष्ट्यापार्थक्यं स्वीक्रियते। तैत्तिरीयारण्यकेऽपि उकतं भाष्यकृत----

'यद् ब्राह्मणानीतिहासान् पुराणानि कल्पागाथानाराशंसी' इति तैत्तिरीयारण्यकं विवृण्वता भगवताभाष्यकृता, पुराणानि ब्रह्मादीनि यद्वा देवासुराः संयत्ता आसन्नित्यादयः, इतिहासः, 'आत्मा वा इदमेवाग्र आसीत् नान्यत् किञ्चनमिषदिति सृष्ट्यादिप्रतिपादकानि पुराणानि' इत्युक्तम्।

भारतीयायाः संस्कृतेर्विद्यायाश्चावबोधार्थं पुराणं विश्वकोषभूतमस्ति। पुराणवाङ्मये बहूनामेवं विधानां विद्यानां संकेतो उपलभ्यन्ते। पुराणप्रोक्तानि अलौकिककर्मणां संज्ञा पदेनोच्यते।

कयापि लोकातीत शक्तया अलोकिकेन वापि सामर्थ्येन कस्यचन अद्भुतस्य पदार्थस्य या सृष्टिर्विलोक्यते, सा खलु सिद्धिसत्ता निर्धारिणी, अद्भुदपदार्थजननशक्तिनी देहे-न्द्रियादिषु विलक्षणपरिवर्तनकारिणी, अलौकिकसामर्थ्यप्रकाशिकाशक्तिसिद्धिपदेन व्यवह्रियते।

महर्षिः पतञ्जलिः योगदर्शने सिद्धेः पञ्चप्रकारान् आदिशति। यथा---

जन्मौषधिमन्त्रतपः समाधिजा सिद्धयः।

**श्रीमद्भागवतेऽपि----**

**परकायं विशन् सिद्ध आत्मानं तत्र भावयेत् ।**
**पिण्ड हित्वा विशेत् प्राणो वायुभूतः षडङ्घ्रिवत् ।।०।।**

**अपि च श्रीमद्भागवते उद्धवस्य प्रश्ने भगवान् श्रीकृष्णप्रोक्तवान्---**

**कया धारणया कास्वित कथंस्वित सिद्धिरच्युत ।**
**कति वा सिद्धयो ब्रूहि योगिनां सिद्धिदोभवान् ।।०।।**
**सिद्धयोऽष्टादशाप्रोक्ता धारणायोगपारगैः ।**
**तासामष्टौ मत्प्रधाना दशैव गुण हेतवः ।।०।।**

**पुराणेषु सांख्यदर्शनप्रभावः---**

अथैकदा देवहूतिस्तत्त्वज्ञानजिज्ञासया कपिलमुपतस्थे। तस्या अभिप्रायं विज्ञाय सञ्जातकारुण्यः स भक्तिसम्पृक्तं सांख्यतत्त्वं सविस्तरमुपदिदेश।

श्रीमद्भागवते तृतीयस्कन्धे षड्विंशतितमेऽध्याये सप्तमश्लोकादरभ्य पञ्चदशश्लोकपर्यन्तं सांख्यदर्शनपद्धतिमनुसृत्यैव प्रकृति-पुरुषादीनां सम्यग् विवेचनं कृतं विद्यते। सांख्ये यथा सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, महान् अहङ्कारः, एकादशेन्द्रियाणि, पञ्चतन्मात्राणि, पञ्चमहाभूतानि च स्वीकृतानि, तद्वत् श्रीमद्भागवतेऽपि चतुर्विंशतितत्त्वानि प्रतिपादितानि-----

**प्रकृतिर्बुद्ध्यहङ्कारौ तन्मात्रैकादशेन्द्रियम् ।**
**भूतानि चेति सामान्यं चतुर्विंशतिरेव च ।।०।।**

अपि च---

**प्रकृतेः पुरुषस्यापि लक्षणं पुरुषोत्तम् ।**
**ब्रूहि कारणयोरस्य सदसच्च यदात्मकम् ।।०।।**

इति देवहूतिप्रश्ने भगवान् कपिलो मातरमुवाचश्रीमद्भागते----

**यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ।**
**प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ।।०।।**
**पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ।**
**एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ।।०।।**
**महाभूतानि पञ्चैव भूरापोऽग्निमरुन्नभः ।**
**तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे ।।०।।**

संख्यासूत्रे यथा 'त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः' इत्यनेन मोक्षस्वरूपं प्रदर्शितम् , तथैव श्रीमद्भागवते तृतीयस्कन्धे सप्तविंशतितमेऽध्याये प्रथमश्लोकादारभ्य त्रिंशच्छ्लोकपर्यन्तं मोक्षस्य विवेचनं कृतम्।

श्रीमद्भागवतस्य चतुर्थस्कन्धे एकत्रिंशदध्याये नारदोक्तमोक्षकथनं सांख्यानुसारमेवास्ति। दशमस्कन्धे सप्तचत्वारिंशत्तमेऽध्यायेऽपि सांख्यदर्शनानुसारमेव तत्त्वोपदेशः कृतो विद्यते। एकादशस्कन्धस्यैकादशेऽध्याये बद्धमुक्तयोर्विषये सांख्यमतमेवावलम्बितमस्ति। ब्रह्मस्तुतौ च सांख्यमतमेवावलम्ब्य देवैर्भगवतः स्तुतिः कृता----

**सत्त्वं विशुद्धं श्रयते भवान् स्थितौ शरीरिणां श्रेय उपायनं वपुः ।**
**वेदक्रियायोगतपः समाधिभिस्तवार्हणं येन जनः समीहते ।।०।।**
**सत्त्वं न चेद्धातरिदं निजं भवद् विज्ञानमज्ञानभिदापमार्जनम् ।**
**गुणप्रकाशैरनुमीयते भवान् प्रकाशते यस्य च येन वा गुणः।।०।।**

सांख्ये यथा पुंप्रकृत्योर्विवेकेन मोक्षप्राप्तिः, तथैव श्रीमद्भागवतस्यैकादशस्कन्धे चतुर्विंशतितमेऽध्यायेऽपि भगवता श्रीकृष्णेनोद्धवं प्रति सृष्टिप्रक्रियाप्रलयप्रकारवर्णनपूर्वकं मोक्षस्वरूपं प्रदर्शितम्। सांख्यसूत्रे यथा 'न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते, सांख्यसारे च----

नित्यशुद्धो नित्यमुक्तो नित्यबुद्धौ निरञ्जनः ।

स्वप्रकाशो निराधारः प्रदीपः सर्ववस्तुषु ।।०।।

इति पद्नेनात्मनो नित्यशुद्धबुद्धमुक्तस्वभावं प्रतिपादितम् , तद्वत् श्रीमद्भागवतेऽपि-

बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः ।

गुणस्य मायाभूतत्वान्न मे मोक्षो न बन्धनम् ।।०।।

श्रीमद्भागवतस्य द्वादशस्कन्धे सप्तमाध्याये दशमश्लोकादारभ्य विंशतिश्लोकपर्यन्तं सांख्यरीत्यैव तत्त्वानां वर्णनं कृतमस्ति----

अव्याकृतगुणक्षोभान् महतस्त्रिवृतोऽहमः ।

भूतसूक्ष्मेन्द्रियार्थानां संभवः सर्ग उच्यते ।।०।।

सांख्ये यथा पुंप्रकृत्योर्विवेकेन मुक्तिस्तथा श्रीमद्भागवतेऽपि प्रकृतिपुरुषविवेकेन मोक्षप्राप्तिः प्रतिपादिता----

भुक्तभोगा परित्यक्ता दृष्टादोषा च नित्यशः ।

नेश्वरस्याशुभं धत्ते स्वे महिम्नि स्थितस्य च ।।०।।

सांख्ये यथा प्रकृतेः कारणत्वं तथा श्रीमद्भागवतेऽपि----

**कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ।**

**भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम् ।।०।।**

विष्णुपुराणस्य प्रथमेंऽशे द्वितीयेऽध्याये एकोनविंशतिश्लोकादारभ्य पञ्चाशच्छ्लोक-पर्यन्तं सांख्यानुसारमेव सृष्टिक्रमः प्रतिपादितः-----

**अव्यक्तं कारणं यत्तत्प्रधानमृषिसत्तमैः ।**

**प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकम् ।।०।।**

**त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् ।**

**तेनाग्रे सर्वमेवासीद् व्याप्तं वै प्रलयादनु ।।०।।**

सांख्ये यथा पञ्चविंशतितत्त्वानि स्वीकृतानि तथैवात्रापि। ध्रुवोहि सांख्यतत्त्ववर्णन-पुरस्सरमेव भगवतः स्तुतिं चकार श्रीद्भागवते महापुराणे।

**एकस्त्वमेव भगवन्निदमात्मशक्तया**

**मायामयोरुगुणया महदाद्यशेषम् ।**

**सृष्ट्वानुविश्य पुरुषं सदसद्गुणेषु**

**नानेव दारुषु विभावसुवद्विभासि ।।०।।**

मार्कण्डेयपुराणस्य चतुर्थेऽध्याये पञ्चचत्वारिंच्छ्लोकादारभ्य त्रिपञ्चाशच्छलोकपर्यन्तं सृष्टिः सांख्यनुसारमेव प्रतिपादिता-----

**एका मूर्तिरनिर्देश्या शुक्लां पश्यन्ति तां बुधाः ।**

**ज्वालामालोपरुद्धाङ्गी निष्ठा सा योगिनां परा ।।०।।**

**वासु देवाभिधानासौ निर्माणत्वेन दृश्यते ।।**

**द्वितीया पृथिवीं मूर्ध्ना शेषाख्या धारयत्यधः ।**

**तामसी सा समाख्याता तिर्यक्त्वं समुपाश्रिता ।।**

**तृतीया कर्म कुरुते प्रजापालनतत्परा ।**

**सत्त्वेद्रिक्ता तु सा ज्ञेया धर्मसंस्थानकारिणी ।।**

वायुपुराणस्य प्रक्रियापादे तृतीयेऽध्याये सांख्यानुसारमेव सृष्टिः प्रतिपादिता--

**यत्तत्स्मृतं कारणमप्रमेयं ब्रह्म प्रधानं प्रकृतिः प्रसूतिः ।**

**आत्मा गुहो योनिरथापि चक्षुः क्षेत्रं तथैवामृतमक्षरं च ।।**

नारदीयपुराणस्य द्विचत्वारिंशत्तमेऽध्याये त्रयोदशश्लोकादारभ्य षट्त्रिंशच्छ्-लोकपर्यन्तं मत्स्यपुराणस्य च चतुर्थाध्याये तृतीयश्लोकतो द्वात्रिंशच्छलोकपर्यन्तं सृष्टिक्रमः सांख्यरीत्यैव वर्णितः-----

**सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम् ।**

**साम्यावस्थितिरेतेषां प्रकृतिः परिकीर्तिता ।।**

केचित् प्रधानमित्याहुरव्यक्तमपरे जगुः ।

एतदेव प्रजासृष्टिं करोति विकरोति च ।।

दिव्यैयमादिसृष्टिस्तु रजोगुणसमुद्भवा ।

अतीन्द्रियेन्द्रिया तद्वदतीन्द्रियशरीरका ।।

द्विव्यतेजोमयी भूप ! दिव्यज्ञानसमुद्भवा ।

न मर्त्यैरभितः शक्या वक्तुं वै मांसचक्षुषा ।।

देवीभागवतस्य सप्तमस्कन्धे द्वात्रिंशदध्याये प्रकृतितत्त्वनिरूपणं सांख्यानुसारमेव कृतम्---

केचित्तां तप इत्याहुस्तमः केचिज्जडं परे ।
ज्ञानं मायां प्रधानं च प्रकृतिं शक्तिमप्यजाम् ।।
विमर्श इति तां प्राहुः शैवशास्त्रविशारदाः ।

वाराहपुराणस्य द्वितीयेऽध्याये षष्ठश्लोकात् पञ्चविंशतिश्लोकपर्यन्तं सांख्यानुसारमेव सृष्टिक्रमः प्रतिपादितः-----

आदावहं व्योम महत्ततोऽणुरेकैव मत्तः प्रबभूव बुद्धि ।
त्रिधा नु सासत्त्वरजस्तमोभिः पृथक् पृथक् सत्त्वरूपैरुपेता ।।

अपि च द्विपञ्चाशत्तमेऽध्याये प्रथमश्लोकादारभ्य पञ्चविंशतिश्लोकपर्यन्तं मोक्षस्य निरूपणं सांख्यरीतिमनुसृत्यैव प्रतिपादितम् ।

ब्रह्मवैवर्तपुराणे प्रकृतिखण्डे प्रथमाध्याये चतुर्थश्लोकतोऽष्टमश्लोकपर्यन्तं प्रकृतिशब्दार्थमभिधाय सांख्यानुसारमेव सृष्टिः प्रतिपादिता-----

**प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः ।**

**सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्तिता ।।**

**गुणे प्रकृष्टसत्त्वे च प्रकाशो वर्तते श्रुतौ ।**

**मध्यमे कृश्च रजसि तिशब्दस्तमसि स्थितः ।।**

**त्रिगुणात्मस्वरूपा या सर्वशक्तिसमन्विता ।**

**प्रधानसृष्टिकरणे प्रकृतिस्तेन कथ्यते ।।**

**प्रथमे प्रवर्तते प्रश्च कृतिश्च सृष्टिवाचकः ।**

**सृष्टेराश्रया या देवी प्रकृतिः सा प्रकीर्तिता ।।**

**योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव सः ।**

**पुमांश्च दक्षिणार्द्धाङ्गो वामाङ्गः प्रकृतिः स्मृता ।।**

कूर्मपुराणस्य पूर्वार्द्धे चतुर्थाध्याये पञ्चदशश्लोकतस्त्रयस्त्रिंशच्छ्लोकपर्यन्तं सांख्यानुसारं सृष्टिक्रमं सप्तमेऽध्याये च सर्गक्रममुक्तवा प्रकृतिपुरुषविवेचनं सांख्यरीतिमनुसृत्यैव कृतम्-----

**अव्यक्तं कारणं यत्तत्तन्नित्यं सदसदात्मकम् ।**

**प्रधानं प्रकृतिश्चेति यमाहुस्तत्त्वचिन्तकाः ।।**

अपि च----

सृष्टिं चिन्तयतस्तस्य कल्पादिषु यथा पुरा ।

अबुद्धिपूर्वकः सर्गः प्रादुर्भूतस्तमोमयः ।।

भविष्यपुराणस्य ब्रह्मपर्वणि द्वितीयाध्याये त्रिंशच्छ्लोकतो द्वात्रिंशच्छलोकपर्यन्तं लिङ्गपुराणे च तृतीयाध्यायस्य द्वितीयश्लोकतस्त्रयस्त्रिंशच्छ्लोकपर्यन्तं सांख्यरीत्येव सृष्टिक्रमो दर्शितः-----

प्रधानं प्रकृतिश्चेति यदाहुर्लिङ्गमुत्तमम् ।

गन्धवर्णरसैर्हीनं शब्दस्पर्शादिवर्जितम् ।।

अव्यक्तादिविशेषान्तं विश्वं तस्याः समुच्छ्रितम् ।

विश्वधात्रीत्वजाख्या च शैवी सा प्रकृतिः स्मृता ।।

शिवपुराणस्य वायवीयसंहितायां नवमेऽध्याये षष्ठश्लोकतश्चतुर्विंशतिश्लोकपर्यन्तं सांख्यानुसारमेव सर्गक्रमोऽभिहितः। तत्रैवैकादशाध्याये च----

प्रधानात् प्रथमं जज्ञे बुद्धिःख्यातिर्मतिर्महान् ।

महत्तत्त्वस्य संक्षोभादहङ्कारस्त्रिधाभवत् ।।

अहङ्कारश्च भूतानि तन्मात्राणीन्द्रियाणि च ।

वैकारिकादहङ्कारात् सत्त्वोद्रिक्तात्तु सात्त्विकः ।।

वैकारिकः स सर्गस्तु युगपत् संप्रवर्तते ।

ब्रह्मपुराणस्य द्वात्रिंशदधिकशततमेऽध्याये चतुर्विंशतितत्त्वानां निरूपणं कृत्वा प्रकृतिस्वरूपप्रदर्शनपूर्वकं तत्र लयप्रकारो दर्शितः-----

प्रधानं तस्य संयोगादुत्पन्नंसुमहत्परम् ।
अहङ्कारो महातेजाः प्रजापतिनमस्कृतम् ।।
अव्यक्तादव्यक्तिमापन्नं विद्यासर्गं वदन्ति तम् ।
महान्तमेभिध्दः सहितं प्रकृतिर्ग्रसते द्विजाः ।।
गुणसाम्यमनुद्रिक्तमन्यूनं च द्विजोत्तमाः ।
प्रोच्यते प्रकृतिर्हेतु प्रधानं कारणं परम् ।।
इत्येषा प्रकृतिः सर्वा व्यक्ताव्यक्तस्वरूपिणी ।
व्यक्तस्वरूपमव्यक्ते तस्यां विप्र प्रलीयते ।।

गरुडपुराणस्य त्रिंशदुत्तरद्विशततमेऽध्याये चतुर्थाध्याये च सृष्टिः सांख्यानुसारमेव वर्णिता----

अनादिनिधनो धाता त्वनन्तः पुरुषोत्तमः ।
तस्माद् भवति चाव्यक्तं तस्मादात्माऽपि जायते ।।
तस्माद् बुद्धिर्मनस्तस्मात्ततः खं पवनस्ततः ।
तस्मात्तेजस्ततस्त्वापस्ततो भूमिस्ततोऽभवत् ।।

अग्निपुराणस्य सप्तदशाध्याये द्वितीयश्लोकादारभ्य षष्ठश्लोकपर्यन्तं सांख्य-तत्त्वमवलम्ब्य सर्गक्रमो दर्शितः-----

**प्रकृतिं पुरुषं विष्णुः प्रविश्याक्षोभयत्ततः ।**

**सर्गकाले महत्तत्त्वमहङ्कारस्ततोऽभवत् ।।**

**अहङ्कारात्तामसात्तु तैजसानीन्द्रियाणि च ।**

**वैकारिका दश देवा मन एकादशेन्द्रियम् ।।**

एवमेव पद्मपुराणस्य सृष्टिखण्डे ब्रह्माण्डपुराणस्य प्रकृतिखण्डे चतुर्थाध्याये प्रथमश्लोकतो विंशतिश्लोकपर्यन्तं सांख्यानुसारमेव सर्गक्रमो दर्शितः----

**आत्मन्यवस्थिते व्यक्ते विकारे प्रतिसंहृते ।**

**साधर्म्येणातितिष्ठन्ते प्रधानपुरुषो तदा ।।**

**तमस्तत्त्वगुणावेतौ समत्वेन व्यवस्थितौ ।**

**अनुद्रिक्तावनुचरौ तेन प्रोक्तौ परस्परम् ।।**

**गुणसाम्ये लयो ज्ञेय आधिक्ये सृष्टिरुच्यते ।**

**सत्त्ववृद्धौ स्थितिरभूद् ध्रुवं पञ्चशिखस्थितम् ।।**

महाभारतस्योद्योगपर्वणि चत्वारिंशदध्यायादारभ्य षट्चत्वारिंशदध्यायपर्यन्तं सनत्सुजातेन धृतराष्ट्रं प्रति सांख्यमतवलम्ब्य तत्त्वानामुपदेशः कृतः।

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ।।

इति श्वेताश्वतरश्रुत्यनुसारं प्रकृतेर्लोहितकृष्णश्वेतरूपाणि प्रतिपादितानि, तथैव महाभारतस्योद्योगपर्वणिसनत्सुजातीयेऽपिचत्वारिंशदध्यायेप्रकृतेस्त्रिरूपत्वं प्रतिपादितम्-

आभाति शुक्लमिव लोहितमिवाथो कृष्णमथार्जुनं काद्रवं वा ।
यद् ब्राह्मणः पश्यति यत्र विद्वान् कथं रूपं तदमृतमक्षरं परम् ।।

लिङ्गपुराणस्य पूर्वार्द्धेऽपि----

तामजां लोहिता शुक्लां कृष्णामेकां बहुप्रजाम् ।
जनयित्रीमनुशेते स्म जुषमाणः स्वरूपिणीम् ।।
तामेवाजामजोऽन्यस्तु भुक्तभोगां जहाति च ।
अजा जनित्री जगतां साजेन समधिष्ठिता ।।

तत्त्वसमासेन्अन्ष्टौ प्रकृतयः, षोडश विकाराः, इति सूत्राभ्यां यथा षोडशाष्टकरूपेण सांख्यीयतत्त्वान्युपस्थापितानि तथैव तानि महाभारतस्य शान्तिपर्वणि अपि निर्दिष्टानि सन्ति----

अष्टौ प्रकृतयः प्रोक्ता विकारश्चापि षोडश ।
तत्र तु प्रकृतीरष्टौ प्राहुरध्यात्मचिन्तकाः ।।

शान्तिपर्वणो मोक्षधर्मप्रकरणे षडधिकत्रिंशत्तमेऽध्याये युधिष्ठिर प्रश्ने----

**सांख्याः सांख्यं प्रशंसन्ति योगा योगं द्विजातयः ।**

**वदन्ति कारणं श्रेष्ठं स्वपक्षोद्भावनाय वै ।।**

**अनीश्वरः कथं मुच्येदित्येवं शत्रुसूदन !**

**वदन्ति कारणं श्रेष्ठं योगाः सम्यक् मनीषिणः ।।**

इत्यादिना सविस्तरं योगविषयं प्रतिपाद्य भीष्मपितामहेन सप्ताधिकत्रिंशत्तमेऽध्यायये सांख्यदर्शनस्य सर्वोत्कृष्टत्वं प्रतिपादितम्----

**शृणु मे त्वमिदं कृत्स्नं सांख्यानां विदितात्मनाम् ।**

**विदितं यतिभिः सर्वैः कपिलादिभिरीश्वरैः ।।**

**सांख्या राजन् ! महाप्राज्ञा गन्छन्ति परमां गतिम् ।**

**ज्ञानेनानेन कौन्तेय! तुल्यं ज्ञानं न विद्यते ।।**

**ज्ञानं महद् यद्धि महत्सु राजन् ! वेदेषु शस्त्रेषु तथैव योगे ।**

**यच्चापि दृष्टं विविधं पुराणे सांख्यं गतं तन्निखिलं नरेन्द्र ।।**

**हित्वा च देहं प्रविशन्ति गोक्षं दिवौकसो द्यामिव पार्थ ! सांख्याः ।**

**अतोऽधिकं तेऽभिरता महार्थे सांख्ये द्विजाः पार्थिवशिष्टजुष्टे ।।**

सांख्ये यथा पञ्चविंशतितत्त्वानि स्वीकृतानि, तथैव महाभारतस्य शान्तिपर्वणि मोक्षधर्मे एकाधिकत्रिंशत्तमेऽध्याये तानि स्वीकृतानि। सांख्ये पुराणे च यथा

सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः----

**सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम् ।**

**साम्यावस्थितिरेतेषां प्रकृतिः परिकीर्तिता ।।**

प्रकृतेर्महान् , महतोऽहङ्कारः, अहङ्कारात् पञ्चतन्मात्राण्येकादशेन्द्रियाणि च, तन्मात्रेभ्यः स्थूलभूतानि, पुरुष इति पञ्चविंशतिर्गणः स्वीकृतः। तथैव महाभारतेऽपि तत्त्वोत्पत्तिक्रमो वर्णितः। सांख्ये यथाऽचेतनापि प्रकृतिर्जगज्जनयति संहरति च, तथैव महाभारतस्य शान्तिपर्वणि मोक्षधर्म एकोनविंशत्यधिकत्रिंशत्तमे-ऽध्यायेऽप्युक्तम्----

**अचेतना चैव मता प्रकृतिश्चापि पार्थिव!**

**एतेनाधिष्ठिता चैव सृजते संहरत्यपि ।।**

सांख्ये यथा जन्मादिव्यवस्थातः पुरुषबहुत्वं स्वीक्रियते तथैव महाभारतस्य शान्तिपर्वणि मोक्षधर्मप्रकरणे पुरुषबहुत्वप्रतिपादनमुपलभ्यते----

**बहवः पुरुषा राजन् ! सांख्ययोगविचारिणः ।**

**नैवमिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।।**

वायुपुराणस्योपसंहारपादे च----

**बहुत्त्वाच्च शरीराणां शरीरी बहुधा स्मृतः ।**

**यस्मात् प्रतिशरीरं हि सुखदुःखोपलब्धिता ।।**

**तस्मात् पुरुषनानात्वं विज्ञेयं तु विजानता ।**

सांख्ये यथा प्रकृतिपुरुषसंयोगात् सर्ग उत्पद्यत इति स्वीक्रियते, तथैव महाभारतेऽपि स्वीकृतम्। शान्तिपर्वणि मोक्षधर्मे षट्त्रिंशदधिकद्विशततमेऽध्याये एकोनत्रिंशच्छ्लोकादारभ्य एकचत्वारिंशच्छ्लोकपर्यन्तं सांख्ययोगयोर्वैलक्षण्यस्य विवेचनं कृतमस्ति। भीष्मपर्वणि च पञ्चविंशत्यध्यायादारीय द्विचतवारिंशदध्यायपर्यन्त-मष्टादशस्वध्यायेषु श्रीमद्भागवद्गीतायां सांख्यसिद्धान्तवर्णनं विस्तरतो भगवता श्रीकृष्णेन कृतम्।

सांख्ये यथा त्रिविधं दुःखं हेयम् , तदत्यन्तनिवृत्तिर्हानम् , प्रकृतिपुरुषसंयोग द्वारा चाविवेको हेयहेतुः, विवेकख्यातिस्तु हानोपायः, त्रिविधदुःखात्यन्तनिवृत्तिः पुरुषार्थो वर्णितः, तथैव गीतायामपि शोकाक्रान्तस्यार्जुनस्य मोहमपाकर्तुं प्रवृत्तो भगवान् श्रीकृष्णः प्रोक्तवान्----

**अशोच्यानन्वशोच्यस्त्वं प्रज्ञावादांश्च भाषसे ।**

**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ।।**

अपि च सांख्ये यथाऽऽत्मनो नित्यत्वं विभुत्वं निर्गुणत्वं च प्रदर्शितम् , तथैव गीतायामपि द्वितीयाध्याये १२-२५ श्लोकैरात्मस्वरूपः प्रदर्शितः।

एवं सांख्ययोगदर्शनं पुराणेतिहासाभ्यां सर्वथा समुपबृंहितमिति तयोस्तत्र प्रभावस्वीकारे न काप्यनुपपत्तिः।

**पुराणेषु योगदर्शन प्रभावः---**

पुराणेषु विस्तरतो विवेचिता योगसम्बन्धिनो विषया योगदर्शने संगृहीताः, ततो दर्शनान्तरेष्वपि आवश्यकतानुसारमभिमताः। यथा कूर्मपुराणस्य उत्तरार्द्धे ११अध्याये, शिवपुराणस्य वायवीयसंहितायामुत्तरार्द्धे ३७ अध्याये, श्रीमद्भागवतस्य (३।२८) अध्याये, स्कन्दपुराणस्य माहेश्वरखण्डान्तर्गतकुमारिकोपखण्डे ५५ अध्याये, काशीखण्डस्य ४१ अध्याये, नारदीयपुराणस्य ३३ अध्याये, अग्निपुराणस्य ३७२ अध्याये, गरुडपुराणस्य च ४४ अध्याये, अष्टानां यमनियमासनप्राणायाम-प्रत्याहारधारणाध्यानसमाधीनां योगाङ्गानां सविस्तरं विवेचनं वर्तते, तथैव योगसूत्रेऽपि तानि विवेचतानि सन्ति। ततो दर्शनान्तरेष्वपि यथावसरं संगृहीतानीति पौराणिकयोगस्य सर्वत्रास्ति प्रभावः। पुराणमाध्यमेन योगदर्शनस्य दर्शनान्तरेष्वपि प्रभावो विचारणीयतामर्हति। तथा च पुराणानुगृहीतत्वादभ्यर्हिततत्वेन योगदर्शनस्य प्रभावः प्रस्तूयते।

न्यायदर्शनस्य सूत्रभाष्ययोः पर्यालोचनयाऽवगम्यते यन्न्यायदर्शनेऽपि योगाभ्यासोऽभ्युपगतोऽस्ति। 'समाधिविशेषभ्यासात्' (४।२।३८) इति न्यायसूत्रादारभ्य 'यमनियमाभ्यासादात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः' (४।२।४६) इत्यन्तैः नवभिः सूत्रै र्योगविद्याभ्युपगमः कृतो भगवता गौतमेन। न्यायभाष्यकारो वात्स्यायनोऽपि योगशास्त्राच्चाध्यात्मविधिः प्रतिपत्तव्यः। सपुनस्तपः, प्राणायामः, प्रत्याहारः, धारणा ध्यानमिति-- उपायस्तु योगाचारविधानमिति (४।२।४६) समाध्यर्थमेकाग्रता-दीनामभ्यासोऽपि न्यायदर्शने प्रोक्तः। न्यायशास्त्रीयापवर्गचिन्तापि सांख्ययोगानुगृहीतैव दृश्यते। न्यायवार्तिकतात्पर्यटीकायां योगसूत्रस्योल्लेखोऽस्ति। यथाह वाचस्पतिः योग इति विषयेण योगशास्त्रं पातञ्जलं लक्षयति (४।२।४६)। भासर्वज्ञकृतन्यायसारे हेयतन्निवर्तकात्यन्तिकहानहानोपायरूपो यादृशः प्रमेयविभागो वर्तते, सोऽपि योगसूत्रम् (२।१६, १७, २५, २६) अनुकरोति। न्यायसारेऽपि ईश्वरलक्षणे योगसूत्रच्छाया लक्ष्यते।

न्यायदर्शने दृष्ट दीयमानायाम् अष्टाङ्गयोगं विना न गतिः। यद्यपि गौतमस्य प्रतिपाद्यो मुख्यविषयः प्रमाणप्रमेयादिषोडशपदार्थानां विवेचनमेव निर्भरोऽस्ति, तथापि मोक्षस्य पद्धतिस्तु तस्यापि योगमेवानुसरति। 'बाधालक्षणदुःखस्यात्यन्ताभावोऽपवर्गः, (१।१।२१) 'तदत्यन्तविमोक्षोऽपवर्गः, (१।१।२२) इति सूत्राभ्यां गौतमेनापि बाधालक्षणदुःखात्यन्ताभावो मोक्षः स्वीकृतः। एवञ्च पुराणेतिहासयोरुपात्तानां योगसूत्रे

सङ्गृहीतानां च योगाङ्गानां न्यायदर्शनेऽपि न्यायदर्शनेऽपि समुल्लेखात् तस्य तत्र प्रभावः स्पष्टं दृश्यते।

वैशेषिकदर्शनेऽपि सैव दृष्टिः। कणादः खलु योगाचारविभूत्या महेश्वरं तोषयित्वा वैशेषिकदर्शनं प्रणिनाय। प्रशस्तपाद आह ग्रन्थान्ते। दुःखात्यन्तनिरोधस्तु वैशेषिकैरभ्युपगम्यत एव। योगिप्रत्यक्षं योगप्रामाण्यञ्चापि स्वीक्रियते मोक्षविषयिणी चर्चापि दृश्यते तत्र। प्रशस्तपादोऽपि प्रत्यक्षप्रकरणे अस्मद्विशिष्टानां तु योगिनां युक्तानां योगजधर्मानुग्रहसामर्थ्यात् सूक्ष्मव्यवहितविप्रकृष्टेषु प्रत्यअयज्ञानमुत्पद्यते। विशेषप्रकरणे वैशेषिकाचार्यैर्योगजं ज्ञानमभ्युपेयते। अपवर्गसम्बन्धि वैशेषिकमतमपि योगानुगतं दृश्यते। संसारापवर्गप्रकरणविशेषे भाष्ये दृश्यते। यथा तदा निरोधान् निर्बीजस्यात्मनः शरीरादिनिवृत्तिः पुनः शरीराद्यनुत्पत्तो दग्धेन्धनानलवद् उपशमो मोक्षः। योगोक्तयमनियमादिसत्तापि प्रशस्तपादीये धर्मप्रकरणे स्वीकृता। वैशेषिकसूत्रेपि (९।१।२) योगादिविचारोऽस्ति।

यद्यपि वैशेषिकदर्शनस्य प्रतिपाद्यानां षण्णां द्रव्य-गुण-कर्म सामान्य-विशेष-समवायानां पदार्थानां विवेचनमेवास्ति मुख्यमुद्देश्यम् तथापि मोक्षमार्गव्यासङ्गे कणादोऽपि पतञ्जलिमेवानुसरति। भगवता पतञ्जलिना योगसूत्रे मोक्षस्य लक्षणं कृतमस्ति 'तदभावात्संयोगाभावो हानं तद्दृशेः कैवल्यम्(२।२५)। एतदेवानुसरति

वैशेषिकदर्शने कणादोऽपिः 'तद्भावे संयोगाभावोऽप्रादुर्भावो मोक्षः' (४।१।१८)। अनयोः सूत्रयोर्भावार्थेन सहाक्षरसाम्यमपि पर्याप्तमस्ति। कणादस्याप्यष्टाङ्गयोगानुष्ठानजन्यो मोक्षोऽभिमतोऽस्ति। अत एव तेन मोक्षमार्गप्रक्रिया 'आत्मकर्मसु मोक्षः, (६।२।१६) इति सूत्रेण प्रदर्शिता।

चन्द्रकान्तोऽस्य सूत्रस्य भाष्ये आत्मकर्मसु यमनियमादिषु सत्सु मोक्षं व्याख्याय इत्युक्तवान्। पतञ्जलेः 'क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः, (२।१२) इति सूत्रस्याधारे एव 'दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय, (६।२।) इति कणादसूत्रस्याविर्भावो जातः। योगसूत्रवत् कणादसूत्राणामपि चरमा सीमा इति शब्देनेव लिखिता। अत एव समालोचकैः पातञ्जलसूत्राणां विकासः कणादसूत्रेभ्यः प्राक्कालत एव स्वीक्रियते। एवञ्च पुराणानुगृहीतानां योगाङ्गानां योगदर्शने वैशेषिक दर्शने च समानोऽस्ति प्रभावः।

वेदान्तदर्शनेऽपि 'आसीनः सम्भवात्, ध्यानाच्च, (४।१।७-११) इत्यादि सूत्रजालैः योगाभ्यास उररीकृतः। वेदान्तदर्शनस्य प्रायः सर्वैः भाष्यकारैः स्वमतपोषणाय योग मतखण्डनाय च योगसूत्राणि स्मृतानि। श्रीशङ्कराचार्यः (२।४।१२) भाष्य 'प्रमाणविपर्ययेत्यादि योगसूत्रम् (१।१।६) सस्मार। (१।३।३३) भाष्येऽपि शङ्कराचार्येण 'स्वाध्यायादिष्टदेवतासंप्रयोगः' (२।४४) इति योगसूत्रं पुराणं च

स्मरन्ति। तत्र ये स्मृत्यधिकरणम् , योगप्रख्यानाधिकरणं च विद्येते, ते न सांख्ययोग-विद्याप्रत्याख्यानपरे-- यतो हि मीमांसया वैदिकवाक्यार्थानां मीमांसा क्रियते, न पुनः वैदिकप्रमेयाणां स्वरूपादिकं विशदीक्रियते प्रमाणीक्रियते वा।

भगवता वेदव्यासेन एतेन योगः प्रत्युक्तः' इति सूत्रेण प्रधानमल्लनिर्बहणन्यायेन योगदर्शनस्य प्रतिवादं कुर्वता वेदान्ताद् योगदर्शनस्य पूर्ववर्तितत्त्वं स्पष्टं स्वीकृतम्। अस्य सूत्रस्य भाष्यकारो भगवान् श्रीशङ्कराचार्यो योगोपपत्तिजनकानि श्रुतिप्रमाणान्युपस्थाय कथयति यत् सांख्यस्मृतिवद् योगस्मृतिरपि ईश्वरसत्तां विनैव केवलं पुरुषद्वारैव जगदाविर्भावं मन्यते। अतः सांख्यस्मृतिवद् सङ्गदोषन्यायेन योगस्मृतेरपि निराकरणं सम्भवति।

मीमांसादर्शनेन सह योगविद्याया विशेषतः सम्बन्धो नास्ति। तत्र कर्मकाण्डपुराणि वेदवचांसि मीमांसितानि। अतोऽत्र योगविद्याया न प्रसङ्गावसरः। याज्ञिककर्मकाण्डमप्याध्यात्मिकाधिदैविकरहस्यमनुकरोतीति न कर्मकाण्डं तत्त्वज्ञानविरोधि। अग्निहोत्रादिबाह्ययागा अन्तर्यागं बोधयन्ति। किञ्च ब्रह्मसूत्रे यानि जैमिनिमतानि सन्ति ततोऽवगम्यते यद् मीमांसाप्रवर्तको जैमिनिरपि योगाभ्यासी आसीत्। यतो हि तेन औपनिषदमात्मज्ञानं व्याख्यातं तच्चात्मज्ञानं योगाभ्यासमन्तरा न सम्भवति। महायोगीश्वरो जैमिनिर्विष्णुपुराणे स्मृतः (४।४।४८)। स तु

दर्शनान्तरदर्शनात् सामगः प्रतीयते। सामविषये प्रोच्यते 'सामानि यो वेद स वेद ब्रह्म। बृहद्देवतायाञ्च 'सामानि यो वेद स वेदतत्त्वम्' (८।१३०) इत्युक्तया सामविद् जैमिनिर्योगाभ्यासीत्यत्र न काचिदस्ति संशीतिः। व्यासशिष्यः सामविद् जैमिनिरेव पूर्वमीमांसां प्रणीतवान् इति न पूर्वमीमांसायोगविरोधिनी भवितुमर्हति। एवं सत्यपि कर्मकाण्डे योगस्य प्रसङ्गानवसरान्न तत्र योगसम्बद्धा विषया चर्चिताः। पुराणानुसारं व्यासशिष्यजैमिनितः सामशाखापरम्परा प्रचलिता। यस्यां गुरुशिष्यपरम्परायां पतञ्जलिर्बभूव। वायुपुराणे ६१ब्रह्माण्डपुराणे च १।३५ द्रष्टव्यम्।

महर्षिजैमिनिप्रणीतं मीमांसादर्शनं तु याज्ञिककर्मकलापमेवाष्टाङ्गयोगसाधनं मनुते। याज्ञिककर्मकलापनिकषया भूयो भूयो मनो मन्दिरस्योत्कर्षणेन कदाचिद् योगैकगम्यस्य सच्चिदानन्दस्य परमात्मनो ज्योतिदर्शनं भवत्येव।

व्याकरणदर्शनेऽपि योगदर्शनानुमता चर्चा दृश्यते। यथा महाभाष्ये (१।४।२९) ज्योतिर्वज्ज्ञानानि भवन्ति, इति वदता भगवता पतञ्जलिना वैयाकरणाः शब्द ब्रह्मोपासका उक्ताः। अतस्तेषां योगित्वे न संशयेलेशोऽपि। शाब्दिकानां योगवेतृत्वं च व्याकरणग्रन्थेषु योगसूत्रमुद्धतमस्ति। यथा नागेशभट्टकृतलघुमञ्जूषायां बौद्धार्थनिरूपणप्रसङ्गे 'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्' १।८ इति सूत्रमुद्धृतमस्ति। पुनरग्रे 'अनित्याशुचिदुःखानात्मसु नित्य-शुचि-सुखात्मख्यातिरविद्या' (२।५) इति

सूत्रमुद्धृतमस्ति। एवमन्यान्यपि सूत्राणि योगभाष्ये उदाहृतानि सन्ति। वाक्यपदीये भर्तृहरिरपि योगशास्त्रं सस्मार----

**इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।**
**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ।।**

शिक्षाग्रन्थेषु यद्यपि न योगविद्या क्वचिदभिहिता, तथापि ओङ्कारमहत्त्वं तेषु कीतितमेवास्ति। तथा उच्चारणक्रियासिद्धये कूर्मवदङ्गसंवरणम् , स्वस्थता, प्रशान्तता, भयहीनतेत्यादयो योगशास्त्रानुगृहीता गुणाः संगृहीता एव। अतः शिक्षान्तर्गता गानोच्चारणविद्याऽपि योगमूला एव।

पौराणिकयोगाद् विकसितं पातञ्जलयोगदर्शनं हि बुद्धतः प्राग्वर्ति। अतः प्राचीनतमेषु बौद्धग्रन्थेषु (चित्त स्मृति-संस्कार-क्लेश-संवेग-दुःखनिरोध-प्रत्यय-भव-अविद्या-वासना-प्रभृतयो) बहवः शब्दा योगदर्शनसममतेऽर्थे एव बौद्धैरपि प्रयुक्ता दृश्यन्ते। क्वचिच्च अभिधेयैक्ये सत्यपि बौद्धैः पृथक् पारिभाषिकशब्दनिर्माणं कृतम्। यथा पातञ्जलीयमभिलक्ष्य मैत्र्यादिसाधनं ब्रह्मविहार इति पदस्य प्रयोगः। अत्रेदं रहस्यं-- योगभाष्ये (४।१०) उद्धृताद् बुद्धात्प्राग्वर्तिनः पञ्चशिखस्य ये चैते मैत्र्यादयो ध्यायिनां विहारास्ते बाह्यसाधननिरनुग्रहात्मनः प्रकृष्टं धर्ममभिनिर्वर्तयन्ति, इत्यतो वाक्याद् विहारपदं संगृह्य तत्र ब्रह्मपदं संयोजितमस्ति। क्वचन शब्दसाम्यमपि

दृश्यते। 'श्रद्धास्मृतिसमाधिप्रज्ञापूर्वककमितरेषाम्' (१।२०) इति योगसूत्रस्य शब्दतोऽनुकरणं प्राचीनबौद्धग्रन्थेषु दृश्यते।

किञ्च ध्यानादीनां यानि लक्षणानि बौद्धैर्भाषितानि तेष्वपि योगदर्शनच्छाया दृश्यते। अपि च यथा योगदर्शने ईश्वरप्रणिधानं तथा बुद्धानुस्मृतिर्बौद्धग्रन्थेषु दृश्यते। अत्रानुस्मृतेर्यल्लक्षणं प्रदत्तं तत् प्रणिधानमेव लक्षयतीति व्यक्तमेव। बौद्धैः कर्मविभागविषये 'दृष्टजन्मवेदनीयम्' अपरपर्यायवेदनीयम्, उपपद्यवेदनीयं च कर्म प्रोक्तम्। योगदर्शने तु 'क्लेशमूलः कर्माशये' दृष्टादृष्टजन्मवेदनीयः (२।१२) इति विभागोऽस्ति। अत्र बौद्धाचार्यचिन्तनस्य मूलं योगदर्शनमेवेति प्रतीयते।

अत्रेदमाकूतम् --- बौद्धाचार्याः पूर्ववर्तिभ्यः शास्त्रेभ्य एव प्रधानतः स्वाभिमतान् शब्दान् संजह्रुः। यथा श्रमण-श्रामणकशब्दो वैदिकौ स्तः। शतपथब्राह्मणे (१४।७।१।२२) अस्यार्थः परिव्राडिति। चित्तपलप्रक्षालनोपायार्थकः परिकर्मेति शब्दो बौद्धैर्बहुलं प्रयुज्यते, परं परिकर्मेति शब्द आश्वलायनश्रौतसूत्रे विद्यते। लोकोत्तरेति शब्दोऽपि महाभारतस्य शान्तिपर्वणि (३२५।३९) प्रयुक्तोऽस्ति। तथैव द्विपदां वर इति शब्दो बौद्धशास्त्रेषु सुप्रचलितोऽपि आर्यसम्प्रदायप्रसिद्धो दृश्यते। बुद्धलक्षणं महाभारते (१२।२८।३२) उक्तम्। बौद्धैर्व्यवहृता निर्वाणादयः शब्दा वैदिकसम्प्रदायग्रन्थेभ्य एव संकलिताः सन्ति। बौद्धैः प्रयुज्यमानः

अष्टाङ्गिकमार्गोऽपि महाभारतस्य वनपर्वणि कण्ठत उक्तोऽस्ति। तत्राष्टाङ्गमार्गशब्दो हि एवं प्रयुक्तोऽस्ति----

**सम्यक् सङ्कल्पसम्बन्धात् सम्यक् चेन्द्रियनिग्रहात् ।**
**सम्यग्व्रतविशेषाच्च सम्यक् गुरुसेवनात् ।।**
**समाज्ञाहरयोगाच्च सम्यक् चाध्ययनागामात् ।**
**सम्यक्कर्मोपसन्नयासात् सम्यक्चित्तनिरोधनात् ।।**

बौद्धशास्त्रे संयुक्तनिकायादिषु यानि चत्वारि आर्यसत्यानि प्रोक्तानि, तान्यपि योगानुसारीण्येव सन्ति।

जैनदर्शनेऽपि पुराणेषु योगसूत्रेष्वपि गृहीता ध्यानसमाध्यादयः शब्दा योगदर्शनत एव समाहृताः सन्ति। आर्हता अपि मोक्षमार्गप्राप्तये सम्यग्दर्शनस्य ज्ञानस्य चापरिहार्यतां वदन्ति। सवितर्कादिध्यानभेदा अपि जैनसूत्रेषु दृश्यन्ते। येन सवितर्क-निर्विचारमहाव्रत-कृतकारितानुमोदितसोपक्रम-वज्रसंहनन-बलकेवलि-कुशल-क्षीण-क्लेश-चरमदेह-ज्ञानावरणीयकर्मादयः शब्दा जैनुषु प्रसिद्धाः। ते प्रायेण योगसूत्र दर्शितार्थेष्वेव प्रयुक्ताः सन्ति।

हरिभद्रसूरिणा योगबिन्दौ पातञ्जलयोगस्य साक्षादुल्लेखः कृतोऽस्ति। यशोविजयकृताध्यात्मसारेऽपि पातञ्जलयोगस्य निर्देशो वर्तते। योगविंशतिकायां टीकायां (६६ श्लोकव्याख्यायम्) योगमार्गज्ञैरध्यात्मविद्भिः पतञ्जलिप्रभृतिभिरित्युक्तम्। एवमेकशतश्लोकस्य योगदृष्टिसमुच्चयटीकायामपि यथा चाह महामतिः पतञ्जलिः इत्युक्तम्। तत्त्वार्थाधिगमसूत्रेऽपि योगसूत्रसाम्यमस्ति। यथा 'भवप्रत्ययो नारकदेवनाम्' (१।२२) 'एकाग्रचिन्तानिरोधो ध्यानम्' (९।२७) अविद्याविषयेऽपि जैनदर्शनं दृष्टिर्बहुलं योगानुसारिणी वर्तते।

यशोविजयविदुषा योगसूत्रमाश्रित्य काश्चन द्वात्रिंशतिका अपि विरचिताः। यथा पातञ्जलयोगलक्षणविचारद्वात्रिंशतिका, ईश्वरानुग्रहविचारद्वात्रिंशतिका, योगद्वात्रिंशतिकावतारः, क्लेशहानोपायद्वात्रिंशतिका, योगमाहात्म्यद्वात्रिंशतिका च। अपि च तत्त्वार्थश्लोकवार्तिके १८पृष्ठे विद्यानन्दस्वामिना यदपि 'द्रष्टुरात्मनः स्वरूपेऽवस्थानं ध्यानं परममुक्तिनिबन्धनम्, इत्याद्युक्तम्, तदपि तदा द्रष्टुः स्वरूपेऽवस्थानम् १।४ इति योगसूत्रानुकूलमेव दृश्यते।

यशोविजयेन योगसूत्रवृत्तिरपि विरचिता, तस्यां प्रथमे पादे २, ११, १६, १८, १९, २५, ३३, ३४, ४६ इतीमानि १० सूत्राणि, द्वितीये पादे १, ४, ९, १०, १३, १६, १९, ३१, ३२, ५५ एतानि १० सूत्राणि,

तृतीये पादे केवलं ५५ एकमेव सूत्रम् , चतुर्थेपादे च १२, १४, १८, २३, ३१, ३३ एतानि ६ सूत्राणि। एवं सङ्कलनया १०+१०+१+६+२७ सूत्राण्येव व्याख्यातानि।

अत्र योगसूत्रशब्दानधिकृत्य तेषां सङ्गतिः प्रायेण विचारिता। क्वचिच्च दोषा अपि आविष्कृताः। यथा १।२ वृत्तौ विकल्पनिद्रास्मृतीनां प्रमाणे विपर्यये चान्तर्भावो भवति। अतो द्वितयी चित्तवृत्तिरेव स्वीकृता, न तु योगसूत्रवत् पञ्चतयी। २।५५ वृतौ योगसम्मता इन्द्रियाणां परमावश्यकता न चित्तनिरोधेन भवति, प्रत्युत ज्ञानेनैव इत्युक्तम्। (१।१६।१८, २।३१।) वृत्तिषु जैनप्रक्रियात्रयेण योगमतं विचारितम्। ४।१४) वृत्तौ उक्तं, यद् जैननयदृष्ट्यैव सांख्यीयं मतं समीचीनं भवति।

एवं पुराणमाध्यमेन योगदर्शनस्य विषया न्याय-वैशेषिक-मीमांसा-वेदान्त-व्याकरण-बौद्ध-जैन-दर्शनेष्वपि विचारिताः सन्तीत्यत्र न कापि संशीतिः।

**पुराणमाध्यमेन दर्शननान्तरेषु प्रभावः---**

प्रमाणानामाधारेण दार्शनिका भागद्वये विभुक्तं शक्यन्ते, श्रौता दार्शनिकाः, तार्किका दार्शनिकाश्च। तत्र श्रौता दार्शनिकाः ते सन्ति, ये मूलतत्त्वान्वेषणे श्रुतिमेव मुख्यं साधनं मन्यन्ते। त एव वेदवादिन उच्यन्ते। एषु शङ्कराचार्य जैमिनि-प्रभृतय आचार्याः समागच्छन्ति।

तार्किकादार्शनिकास्तु ते सन्ति ये मूलतत्त्वस्यानुसन्धाने एकमात्र, तर्कस्य साहाय्यं गृह्णन्ति। एते श्रुतिप्रतिपादितानपि विषयान् तर्कनिकषायां परीक्ष्यैव प्रमाणं मन्यन्ते। सांख्या योगा नैयायिका अपि तार्किका एव सन्ति। यतोऽनुमानबलेन एभिरात्मप्रतिष्ठा कृता। यत एषां मते वेदोऽपौरुषेयो नित्यश्चोच्यते।

श्रौततार्किकयो र्दार्शनिकयो रियानेवास्ति भेदो यत् श्रौतपक्षे वेदः स्वतः प्रमाणं मन्यते, परं तार्किका वेदानां परतः प्रामाण्यं स्वीकुर्वन्ति। तेषां कथनमस्ति, यद् वेदः पौरुषेयोऽनित्यश्चास्ति तत्सिद्धये साधकान्तरमपेक्ष्यते। अतस्ते वेदमीश्वरप्रणीतं मन्यन्ते।

मीमांसादर्शने वेदस्य पौरुषेयापौरुषेयत्वविचारप्रसङ्गे सिद्धान्तितं यद् यथा मानवशरीराद् अनायासं निःश्वासा निःसरन्ति तत्र न बुद्धेः आवश्यकता, नापि कश्चन प्रयत्नोऽपेक्ष्यते तथैव वेदा अपीश्वरनिःश्वासरूपेण प्रादुर्भूताः सन्ति। अत एव ते अपौरुषेया इति उच्यन्ते। अतः श्रौतदार्शनिकैः श्रुतेः प्रामाण्यं सर्वेभ्योऽधिकं मन्यते।

भारतीयदर्शनानि दुःखस्याधारशिलायां प्रतिष्ठितानि सन्ति, प्रायः सर्वाणि दर्शनानि दुःखनिवृत्तेरुपायान्वेषणे सन्ति संलग्नानि। त्रिविधदुःखसन्तप्तानां प्राणिनां दुःखविनाशाय सुखसाधनाय च भवति स्वाभाविकी प्रवृत्तिः।

सांसारिकदुःखानामात्यन्तिकनिवृत्तिपूर्वकं शाश्वतसुखप्राप्तेरुपायप्रदर्शनमेवास्ति दर्शनानां प्रधानं लक्ष्यम्। दार्शनिकसिद्धान्ते सांसारिकसुखं बन्धनं तन्निवृत्तिश्च मोक्ष उच्यते। इदमेव वन्धनं मोक्षश्च भारतीयदर्शनानां मुख्योऽस्ति विषयः। तत्स्वरूपनिर्णये दुःखनिवृत्त्युपायविश्लेषणे च तत्तद्दार्शनिकानामस्ति भिन्नं भिन्नं मतम्। कश्चिदात्मस्वरूप-साक्षात्कार इति मोक्षं वदति, अपरो महेश्वरसेवया मोक्षो लभ्यते इति कथयति, अन्यो जीवनमेव मोक्षप्राप्तिवार्ता वदति तर्हीतरः कान्तालिङ्गनसुखस्योपलब्धिरेव मोक्षं वदति।

आत्यन्तिकदुःखनिवृत्ति पूर्वकं शाश्वरसुखमेव मोक्षः। मोक्षोपलब्धये श्रुतयस्तूपायान् निर्दिशन्त्येव, परं सर्वेषु दर्शनेष्वपि एतद्विषये सम्यग् विचारः कृतोऽस्ति।

बौद्धदर्शनं चतुर्णामपि सत्यानां ज्ञानमेव मोक्षस्य साधनं मन्यते, न्यायदर्शनं पदार्थसाक्षात्कारमेव मोक्षसाधनं स्वीकरोति, श्रीशङ्कराचार्या आत्मज्ञानमेव मोक्षसाधनमभिदधति, चार्वाकदर्शनं देहनाशं मोक्षं ब्रवीति, केचन मोक्षविषयं विचारयन्तः पुनर्जन्मसिद्धान्तमङ्गीकृत्य ब्रुवते यदस्मिन् संसारे यावज्जनन-मरण-चक्रं प्रचलति तावत्प्राणिनो बन्धने एव तिष्ठन्ति, किन्तु मोक्षे जाते न पुनः प्राणिनो जन्म गृह्णन्ति, नापि म्रियन्ते।

पाश्चात्त्यदर्शनेषु मोक्षस्य विषये तत्रत्या दार्शनिका मौनमालम्बन्ते। यद्यपि पाश्चात्त्यदर्शनेऽपि भौतिकवादस्य धरातलादुत्थाय श्रीहीगेलस्य प्रत्ययवादे प्रवेशाय पूर्णः प्रयासो जातोऽस्ति, अथापि भारतीयदर्शनानां गाम्भीर्यस्य लेशोऽपि न तस्मिन् दर्शने समायातः, यतो हि भारतीयं दर्शनं न कदापि जीवनात्पृथगभिमतम्। सदा जीवनधरातले एव सर्वदर्शनानां प्रतिष्ठा कृताऽस्ति। इदमेवास्ति कारणं यद् भारतीयं दर्शनं पाश्चात्त्यदर्शनवन् न केवलं तत्त्वानामेव मीमांसा कुरुते, किन्तु क्रियाचार-मोक्ष-प्रमाणादि-विषयजातमप्यात्मसात्कुरुते। पाश्चात्त्यदर्शनं तत्त्वमीमांसायामेतादृशं सन्नद्धमस्ति यदन्येषु प्रश्नेषु विचारस्यावश्यकतैव नास्ति। येषु विषयेषु भारतीया

दार्शनिकाः पूर्वमेव विस्तृतं विचारं कृतवन्तः, तेषु पाश्चात्त्ये जगति इदानीमेवानुसन्धानसमारब्धं तथा नेदानीं यावदपि ते कस्मिंश्चिन्निश्चिते तथ्ये समागताः, पाश्चात्त्यदर्शनमिदानीमपि ईश्वरजगज्जीवनादिव्याख्यायामपूर्णमिवास्ति। अतो भारतीयं दर्शनं सर्वाङ्गीणं परिपूर्णदर्शनमस्ति।

भारतीयानां दृष्टौ तत्र न परिवर्तनस्य, नापि परिवर्द्धनस्य, न च संशोधनस्यापि अस्ति आवश्यकता, कामं तेषां सङ्कलनं भवेत् पाश्चात्त्यदर्शनैः सह तेषां तुलना क्रियते अथवा तत्र विद्यमानं कञ्चिन्महत्त्वपूर्णं प्रश्नमादाय गवेषणाया आवश्यकता अनुमीयेत।

मोक्षविषये भारतीयं दर्शनं पूर्णं समाधत्ते। दर्शनतारतम्याच्चार्वाकदर्शनत आरभ्य शङ्कराचार्यपर्यन्तं स्वस्वसम्प्रदायानुसारं सर्वे दार्शनिकाः तत्तद्दर्शनेष्वभिमत-मोक्षमार्गमाश्रयन्ते। विभिन्नेषुआस्तिकदर्शनेषु विषयान्तरे कामं मतभेदः स्यात् , किन्तु मोक्षसत्तायां सर्वेषामैक्यमतमस्ति, यन्मूलतत्त्वसाक्षात्कारेणैव मोक्षस्योपलब्धि-र्भवितुमर्हति नान्यथा।

विषयममुमादाय कस्यचिद्वस्तुनो ज्ञानं कथङ्कारं क्रियेत? शुद्धज्ञानस्य कानि कानि सन्ति साधनानि? आत्मसाक्षात्कारः कथं कर्त्तव्यः? इत्यादि विषये

प्रत्येकं दर्शनेषु विचारः कृतोऽस्ति। एतदर्थं तत्तद्दर्शनेषु प्रमाणरूपेण साधनानि निर्दिष्टानि सन्ति। स्वस्वरुच्यनुरूपा दार्शनिकैः प्रमाणानां संख्याऽपि निर्धारिताऽस्ति।

प्रत्यक्षमेवैकं प्रमाणमिति चार्वाकाः प्रत्यक्षमनुमानं चेति द्वे प्रमाणे इति बौद्धा वैशेषिका आर्हताश्च, प्रत्यक्षानुमानागमा इति त्रीण्येव प्रमाणानीति सांख्याः योगाश्च, तैः सहोपमानमपीति चत्वारि प्रमाणानि नैयायिकाः, तैः साकमर्थापत्तिरपीति पञ्च प्रमाणानीति मीमांसकाः, पूर्वोक्तैः पञ्चभिः सहानुपलब्धिरिति षट्भाट्ट वेदान्तिनौ, तैः षड्भिः सार्द्धं सम्भवैतिह्यावित्यष्टौ प्रमाणानीति पौराणिकाः, चेष्टया सह तानि नव प्रमाणानीति आलङ्कारिका मन्यन्ते।

भारतीयदर्शनस्य प्रधानं लक्ष्यमस्ति मोक्षः। अयं परमपुरुषार्थः मोक्षः, निःश्रेयसं, कैवल्यम् , अपवर्गो, निर्वाणं, मुक्तिश्चोच्यते। धर्मार्थकाममोक्षेषु चतुर्षुपु रुषार्थेषु मोक्षएव मुख्यो नित्यो निरतिशयचास्ति। अत एव श्रेयोऽभिलाषिणो योगिनो धर्मार्थकामान् त्रीन् परिहाय अस्य प्राप्तये प्रत्यहं प्रयतन्ते। कर्मणो जगतश्च भयङ्करतामालोक्य तत्त्वविदो मुमुक्षवो भवन्ति। गुणानामिन्द्रियाणां भूतानां प्रकृतिर्पुरुषयोः स्वभावस्य च यथार्थज्ञानेन मोक्षस्यापलब्धिर्भवति। वस्तुतो बन्धमोक्षौ पुरुषस्य अवास्तविकौ स्तः। मोक्षविषये दार्शनिकानां विभिन्नमतमस्ति।

चार्वाको हि देहनाशं मोक्षं वदति, शून्यवादी आत्मन उच्छेदं मोक्षं मन्यते, बौद्धा निर्मलज्ञानोत्पत्तिमेव मोक्षं कथयन्ति, जैनमते कर्मोत्पन्नदेहे आवरणाभावाज्जीवस्योर्ध्वगमनं मोक्षोऽस्ति, रामानुजमते ईश्वरगुणप्राप्तिः तत्सरूपानुभवश्चास्ति मोक्षः। पाशुपतदर्शने परमेश्वरत्वप्राप्तिः, शैवदर्शने शिवत्वोपलब्धिः, प्रत्यभिज्ञादर्शने आत्मनः प्राप्तिश्च मोक्षोऽभिमतः। वैशेषिकदर्शनं समस्तविशेषगुणानां नाशं मोक्षं मन्यते, नैयायिकाश्चात्यन्तिकदुःखनिवृत्तिपूर्वकं सुखप्राप्तिं मोक्षं कथयन्ति, मीमांसका विविधवैदिककर्मद्वारास्वर्गादिप्राप्तिमेव मोक्षं स्वीकुर्वन्ति, वैयाकरणा ब्रह्मस्वरूपाया पराख्याया वाचो दर्शनं मोक्षमभिदधति, सांख्यदर्शने प्रकृतौ स्वव्यापारादुपरतायां पुरुषस्य स्वरूपेऽवस्थितिरेव मोक्षो मतः, योगदर्शने चिच्छक्तेः निरुपाधिकरूपात्स्वरूपेऽवस्थानं मोक्ष उच्यते। अद्वैतवेदान्तदर्शने मूलाज्ञाननाशे सतिआत्मसाक्षात्कार एव मोक्षः कथ्यते।

मोक्षो हि सर्वपुरुषार्थेषु श्रेष्ठतमः। अत एव भावनोपनिषदि लिखितमस्ति यद् धर्मार्थकामा अनित्याः सन्ति, केवलं मोक्ष एवास्ति नित्यः। अतस्तदुपलब्धये प्रयत्नो विधेयः---

**धर्मार्थकामाः सर्वेऽपि तेऽनित्या मोक्ष एव हि ।**
**नित्यस्तस्मात्तदर्थाय यतेत मतिमान्नरः ।।**

नारायणोपनिषदि च प्रोक्तं यद् यतो विष्णुकृपां विना मोक्षो न लभ्यते, अतो जागतिककर्मजालाद् मुक्तिमिच्छता नरेण तस्य नारायणस्य नित्यं चिन्तनं विधेयम्।

विष्णुपुराणे कथितमस्ति यत् भगवति विष्णौ प्रसन्ने सति अस्मिन् लोके न कोऽपि पदार्थो दुर्लभोऽस्ति, धर्मार्थकामप्रार्थना व्यर्थाऽस्ति, यतस्तेऽस्थायिनोऽल्पाश्च सन्ति। अतो मुक्तिकामा अनन्तं ब्रह्मवृक्षमाश्रित्य निःसन्देहं मुक्तिरूपं फलं लभन्ते-

**तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते ।**
**समाश्रिताद् ब्रह्मतरोरननतान्निःश्रेयसं मुक्तिफलं प्रयान्ति ।।**

विवेकख्यातिरेव सांख्यस्य चरमं लक्ष्यमस्ति। प्रकृतिपुरुषोः पृथक्त्वज्ञानं विवेकख्यातिरुच्यते। विवेकख्यातौ जातायां यदा पुरुषस्य प्रकृतितः प्रतिबिम्बाऽवसरः सांख्यस्य मुक्तिः, यत्र पुरुषः स्वरूपेऽवस्थितो भवति। परमेतस्य नायमभिप्रायो यत् प्रकृतिः सर्वथा नश्यति। अस्यां मुक्तिकल्पनायां प्रकृतिरवश्यं तिष्ठति, परन्तु पुरुषेण सह तस्याः केन प्रकारेण सम्बन्धो न भवति।

सांख्यस्य मुक्तिरानन्दविरहिताऽस्ति, न सा वेदान्तस्य मुक्तिरिवानन्दमयी सांख्यमते क्लेशावरणस्यैव क्षयो भवति, किन्तु वेदान्तनये ज्ञेयावरणस्यापि लयो जायते।

"पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चिच्छक्तेः" (४।३४) इति योगसूत्रानुसारं पुरुषार्थरहितगुणानां परिणामद्वारा विलयः कैवल्यम् आहोस्वित् पुरुषस्य स्वरूपेऽवस्थानं वा कैवल्यम्। येषां गुणानां फलं जीवैर्भुज्यते तेषां सृष्टिकारकगुणानां प्रतिलोमद्वारा लयेन तेभ्य उपरमो मोक्षः। अर्थात् प्राकृतिक-त्रिगुणापाशविमुक्तिरेव मोक्षः, निर्विकल्पाख्यस्यासंप्रज्ञातसमाधे परिपूर्णावस्थायाः प्राप्तिरेव मोक्षः। वाङ्मनोबुद्ध्यगोचरावस्था वा मोक्षः।

एकतत्त्वाभ्यासेननैजमन्तः करणं क्रमशः स्वस्याभिमुखमग्रेसारयन् साधको वैषम्यावस्थां प्रकृतिं यदैव साम्यावस्थां परिणमयति तदैव स्वरूपप्रतिष्ठाद्वारा स कैवल्यमधिगच्छति। यावदन्तःकरणवृत्तिः चाञ्चल्येन तरङ्गायिता बुद्धिस्तिष्ठतिऽन तावद् द्रष्टुः पुरुषस्य स्वरूपावस्थानं संभवति। समाधिदशायामेकतत्त्वस्य परिपूर्णोदयेन पुरुषस्यावस्थानं जायते। पुरुषार्थमेव प्रकृतिः सर्वं क्रियाकलापं विधत्ते। यदा कैवल्योदयेन पुरुषः स्वरूपं प्रतिपद्यते तदानीं स्वत एव प्रकृतिपुरुषयोः सम्बन्धविच्छेदात् प्रकृतिः क्रियाहीनतां प्राप्ता सती लीयते। इयमवस्थैव वेदान्तस्य अद्वैतभावः, सांख्यस्य आत्यन्तिकदुःखनिवृत्तिः, ज्ञानमार्गस्य ब्रह्मसद्भावः, भक्तिशास्त्रस्य परा भक्तिः, योगशास्त्रस्य च कैवल्यम्।

तथा च स्वस्वरूपाधिगमो द्वैतभावविरहिता अद्वैतावस्था वा कैवल्यम्। इमामवस्थामधिगत्य अल्पज्ञानवान् जीवः सर्वज्ञपरमपुरुषसाक्षात्कारेण समुद्रे तरङ्गवत् परे पुरुषे विलीयते। इयमेव कैवल्यदशा सर्वेषां साधनानां लक्ष्यभूतो वेदसिद्धान्तः, योगसाधनस्य च चारमं लक्ष्यम्। तस्माज्जीवात्मनः परमात्मनि विलयो मुक्तिः कैवल्यं वेति समुदीर्यते। योगसाधनद्वारा चित्तवृत्तिनिरोधेन पुरुषस्य स्वरूपप्राप्तिरेव योगफलम् , एतदेव च मुक्तिपदमाम्नातम्।

अन्यानि दर्शनानि ज्ञानेन मोक्षलाभं मन्यन्ते, किन्तु योगदर्शनोक्ता मुक्तिप्राप्ति-पद्धतिः सर्वविलक्षणा अलौकिकतत्त्वाभ्यासेन निर्वाणव्यूहप्रणासपूर्वकं निर्विकल्प-समाधिद्वारा मुक्तिमासाद्यते इति योगदर्शनसिद्धान्तः।

आत्मा किल नित्यः मुक्तः, शुद्धः बुद्धः, अद्वितीयः, द्वैतप्रपञ्चरहितः, ज्ञानस्वरूपश्चेति। वृत्तीनामावरणेनान्तः करणं चाञ्चल्यमासादयद् आत्मस्वरूपमाच्छ-दयति। सवीजसमाधितः क्रमशो निर्बीजसमाधावुपगते स्वत एवात्मस्वरूपं प्रकाशते ततश्च न पुनरज्ञानबन्धनं स्थातुमर्हति। निर्जीवसमाधिप्राप्तिपूर्वकं कैवल्याधिगमस्यैत-देवास्ति रहस्यम्।

वस्तुतः पुरुषो नित्यशुद्धबुद्धमुक्तस्वभावः, बन्धनं यदि तस्य स्वाभाविको धर्मश्चेत्तर्हि यावद्द्रव्यभावित्वसम्बन्धहेतुत्वान्नैव स्यात्तन्मुक्तिः। प्रकृतिसम्बन्धात् पुरुषस्य केवलमौपचारिको बन्धः। जपाकुसुमसंसर्गात् स्फटिकमणौ लौहित्यसञ्चार इव पुरुषे प्रकृतिसंसर्गजन्यमभिमानिकबन्धनमवसेयम्।

योगसाधनेनान्तः करणे निरुद्धे तद्गतवृत्तिषु निरुद्धासु चैतन्यरूपपुरुषस्य पाशबन्धनकारकं न किमपि सम्भवेत्। तदानीं चैतन्यस्वरूपः पुरुषः स्वीयं स्वरूपं प्रतिपद्यते। अन्तः करणं दर्पणवन्निर्मलं विद्यते। यथा नाना वर्णसान्निध्याद् दर्पणो नानारूपतां धरयति तथाऽन्तः करणमपि अध्यवसेयम्। यथा तरङ्गिते जलाशये न मुखाकृतिः सुस्पष्टं परिलक्ष्यते तथैव नानावृत्तिसङ्कुलेऽन्तःकरणे नैव द्रष्टुश्चैतन्यं यथावत् प्रतिभासते। चैतन्यस्य पूर्णरूपेण प्रतिभानमेव योगसाधनलक्ष्यमस्ति। अतः सच्चिदानन्दरूपचैतन्यस्य स्वस्वरूपोपलब्धिरेव मोक्षः।

यथा निर्मलोऽपि स्पटिकमणिः रञ्जितवस्तुसाहचर्याद् रञ्जितः प्रतीयते तथैव शुद्धबुद्धमुक्तस्वभावः परिणामादिरहितः पुरुषोऽपि प्रकृतिजन्यदृश्यसम्पर्का-द्द्रष्टृरूपं धत्ते। द्रष्टृदृश्ययोर्यथार्थरूपपरिज्ञानं मोक्षः।

यथा मानवः क्रमशः सोपानाश्रयेण सौधपृष्ठमधिरोहति तथैव योगसाधन प्रक्रियाभिः साधकोऽष्टाङ्गयोगसाहाय्येन निर्मलां विवेकख्यातिमधिगम्य अन्ते मोक्ष पदं लभते।

बन्धमोक्षौ विकल्पौ मतौ स्तः। विकल्पविर्ययौ च योगे चितवृत्ती स्तः। विपर्ययस्य बाधो भवति, न विकल्पस्य। अयं व्यवहारे उपयुज्यतेऽपरस्तात्त्विको नास्ति। द्वयोः पृथक् वस्तुनोरेकत्वस्वीकारः, तथैकस्य वस्तुद्वयरूपे स्वी कारो वा विकल्पः। बन्धो मोक्षः पुरुषश्चेति त्रयोऽत्यन्तं भिन्नाः सन्ति। बन्धमोक्षाभ्यां पुरुषस्य सम्बन्धो विकल्पः, यतो हीमौ प्रकृतिमन्तौ स्तः। सांख्यनये बन्धनं मोक्षश्च प्रकृतेरेव भवति, न पुरुषस्य। स हि नित्यशुद्धबुद्धमुक्तस्वभावोऽस्ति। प्रकृतेः पार्थक्यं ज्ञात्वा केवलीभाव एव पुरुषस्य मोक्ष उच्यते। यथा अचोरश्चौरैः सह वर्तमानश्चोर इव गृहीतो भवति तथैव प्रकृतेः सम्पर्केण बन्धनरहितोऽपि पुरुषो बद्ध इत्युच्यते। शिवसंहितायां १३अध्याये मोक्षविषय एवमुक्तो विद्यते----

**मोक्षस्य हि न वासोऽस्ति न ग्रामान्तरमेव वा ।**
**अज्ञानहृदयभ्रान्तिर्नाशो मोक्ष इति स्मृतः ।।**

ब्रह्मपुराणे (२३९।२२) महाभारते चोऽपर्युक्तस्यैव तथ्यस्य समर्थनं भवति-

**सक्तमात्मानमीशे च देवे नारायणे तथा ।**
**देवे मोक्षे च संसक्तं मोक्षं सक्तं तु न क्वचित् ।।**

दार्शनिके जगति मोक्षविषये विपुलो विचारो जातोऽस्ति। मोक्षस्वरूपनिर्णये दार्शनिकानां सिद्धान्ताः परस्परं विलक्षणाः प्रतीयन्ते। यतो हि ते विभिन्नेन रूपेण विचारं प्रकुर्वन्तिः। मोक्षशब्दस्य साधारणोऽर्थोऽस्ति मुक्तिः। कस्मान्मुक्तिः? यस्मान्मोक्तुमिष्यते तदस्ति दुःखम्। अतो मोक्षस्य साधारणोऽर्थो दुःखान्मुक्तिरिति सम्भवति। महर्षिगौतमोऽनयैव दृष्ट्या मोक्षविचारं कुर्वन् ब्रवीत् यद् दुःखात्यन्त-निवृत्तिरेव मोक्षः, तदत्यन्तविमोक्षोऽपवर्गः (१।१।२२)। वेदान्तिनस्तु अत्र ब्रह्मसमश्नुते, इति श्रुत्यनुसारं दुःखात्यन्तनिवृत्तिपूर्वकं ब्रह्मप्राप्तिमोऽक्ष इति वदन्ति। महर्षिणा पतञ्जलिना मोक्षार्थं कैवल्यशब्दस्य निर्धारणं कृतम्। तन्मते कैवलयार्थोऽस्ति आत्मस्वरूपावाप्तिः (४।३३)। एवं पतञ्जलिसिद्धान्तानुसारं दुःखात्यन्तनिवृतिरूपस्य मोक्षस्यानुभवकर्ता कश्चिच्चेतनोऽपेक्षितोऽस्ति यो दुःखाभावस्य साक्षी भवेत्। अतो नैयायिकानामपवर्गः चेतनस्वरूपे स्थितिस्वीकारमन्तरा न कदापि संभवति। किञ्च यदि आनन्दप्राप्तिर्भावपदार्थः स्वीक्रियेत तर्हि अस्यानन्दस्य भोक्त्रा केनापि भवितव्यम्। यतो न चेतनमन्तरा किञ्चिद् भोग्यं भोक्तुं शक्येत। एवं सति कस्यचित् करणस्यावश्यकता स्वीकर्तव्या उपतिष्ठते, किन्तु वेदान्ती नैवं मन्तुमुद्यतोऽस्ति। यत आत्मनो भिन्ने आनन्दरूपे कस्मिंश्चिद् भावपदार्थे सिद्धे सति अद्वेते सिद्धान्तविरोधः, तथा मोक्षानन्दो नाशवान् स्यात्। अत आत्मनश्चैतन्यरूपाद्भिन्नः कश्चिदानन्दपदार्थो नास्ति। एतेनापि निर्गणे चेतनस्वरूपे स्थितिरेव मोक्षः सिध्यति। अतो नैयायिकवेदान्ति-भ्यामपि योगप्रतिपादितस्य कैवलयस्योपेक्षां कर्तुं न शक्यते। तथा च प्रकृतिपुरुषयोः

पार्थक्यज्ञानान्मोक्ष इति सांख्यसिद्धान्तः स्थिरायते।

पुराणेतिहासयोः प्रकृतिपुरुषयोः पार्थक्यापार्थक्यविषयेऽनेकविधप्रश्न- विवादो उपस्थायान्ते पार्थक्यमेवाभ्युगतम्। अनेनैव पार्थक्यज्ञानेन मोक्षस्य स्थितिः प्रदर्शिताऽस्ति। ब्रह्मपुराणे (२४३।१९-२२) तथा महाभारते च----

**क्षरो भवत्येष यदा तदा गुणवतीमथ ।**
**प्रकृति त्वाभिजानाति निर्गुणत्वं तथात्मनः ।।**
**तदा विशुद्धो भवति प्रकृतेः परिवर्जनात् ।**
**अन्योऽहमन्येयमिति यदा बुध्यति बुद्धिमान् ।।**

अत्र प्रकृतिसम्पर्के पुरुषः क्षरः प्रोक्तः। यतो हि स अनेकासु योनिषु भ्रमति। यदा स प्रकृतेः स्वरूपं आत्मनश्च निर्गणस्वभावं जानाति, तदा विशुद्धो भूत्वा मुक्तो भवति। अस्यां स्थितौ स प्राकृतगुणजालं नन्दति नीभ एवमत्र प्रकृतिपुरुषयोः पार्थक्यज्ञानान्मोक्ष इति स्पष्टतया स्वीक्रियते।

वायुपुराणे प्रकृतिपुरुषपार्थक्यज्ञानान्मोक्षस्य स्थितिः प्रदर्शिता। श्रीमद्भागवते प्रतिलोमानुलोमक्रमेण तत्त्वज्ञानं मोक्षस्यानन्यसाधनमुक्तम्। कैवलयविषये विचिकित्सां कुर्वन्ती देवहूतिर्भगवन्तं कपिलं प्रोक्तवती-- 'पुरुषं प्रकृतिं ब्रह्मन्! न विमुञ्चति

कर्हिचित् (२४।२७)। तदुत्तरे भगवान् कपिलः प्रकृतिपरिवर्तनेनात्मनः केवलीभावः कैवल्यमिति प्रोक्तवान्। सर्वपल्लीराधाकृष्णन् महोदयो विषयविषयिणोर्भेदं नोचितं मन्यते। तदनुसारं सांख्यस्य द्वित्ववादः, दार्शनिकसमस्यायाः समाधानं न ददाति। प्रकृतिपुरुषौ काल्पनिकौ स्तः, अत एव व्यवहारबाह्यौ।

परमेतन्न समीचीनम् , उपर्युक्तैर्विवेचनैः स्पष्टमस्ति यत् पुराणेषु महाभारते च द्वित्ववादः स्पष्टतया स्वीकृतोऽस्ति। इमे ग्रन्था व्यवहारप्रधानाः सन्ति। दर्शनस्यालोके व्यवहारस्य व्यवस्थितिकरणमेतेषां प्रधानं कार्यमस्ति। अस्यां स्थितौ सांख्यस्य द्वित्ववादो व्यवहारबाह्य इति कथनं सर्वथा अनुचितं प्रतिभाति।

पुराणेतिहासयोः मोक्षस्य विचारसमये सर्वत्र प्रकृतिपुरुषयोः पार्थक्यस्यौचिती प्रदर्शिता। सहैव एषु विभिन्नदर्शनानां समन्वयार्थमैक्यज्ञानरूपे मोक्षस्य वर्णनं यत्र तत्र प्राप्यते। एतदनुसारमेकेन परमेण तत्त्वेन जीवात्मन ऐक्यमेव मोक्षः। इदमैक्यमपि परमस्य तत्त्वस्यानैक्याद् ब्रह्मैक्य-नारायणैक्य-कृष्णैक्य-शिवैक्यसूर्यैक्य-शक्त्यादिरूपेषु अनेकप्रकारकमस्ति। एवंविधं वैभिन्यं विभिन्नसम्प्रदायानामभ्युपगमवैभिन्यादेवास्ति। एषु सांख्यसिद्धान्त आधाररूपेण स्वीकृतोऽस्ति पार्थक्यज्ञानमतिदुर्लभम्। प्रकृतिपुरुष-विवेक एव मोक्षस्यानन्यं साधनमस्ति। परमयं विवेको न सरलतया लभ्यते----

प्रयत्नाद् यतमानस्तु योगी संशुद्धकिल्बिषः ।

अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ।।

एवंविधो विवेकोऽनेकजन्माभ्यासेनैव भवितुमर्हति। कर्मविपाकानुसारं कर्मनियम आत्मस्वातन्त्र्यस्य न व्याघातकः, किन्तु अज्ञानाद् निष्क्रिये आत्मनि आगन्तुकरूपेण कर्तृत्वाद्यभिमानो भवति, स च विवेकपर्यन्तं तिष्ठति।

पाश्चात्या विद्वांस आत्मस्वातन्त्र्यस्थाने इच्छास्वातन्त्र्यं मन्यन्ते। तन्न युक्तं यतो हि इच्छाऽस्ति मनसो धर्मः, आत्मस्वातन्त्र्यं तु अनेकजन्मसंसिद्धिविवेकजन्यमस्ति। विवेकाय च सहस्रेषु कश्चिचदेक एव प्रयतते। तदुक्तं ब्रह्मपुराणे महाभारते च---

सहस्रेषु नरः कश्चिन्मोक्षे बुद्धि समाश्रितः ।

दुर्लभत्वं च मोक्षस्य विज्ञाय श्रुतिपूर्वकम् ।।

पुराणेतिहासयोः सर्वमध्यात्मविवेचनं प्रकृतिपुरुषविवेकनिमित्तमेवास्ति। प्रकृतेः सर्वो विकासः पुरुषस्य विमोक्षार्थमेवास्ति। प्रकृतिपुरुषविवेकाय क्षराक्षर-व्यक्ताव्यक्त-क्षेत्रक्षेत्रज्ञादीनां विचार उपस्थापितोऽस्ति। एवमुत्पन्नेन ज्ञानेन सर्वाणि कर्माणि भस्मसाद् भवन्ति। कैवल्यस्य च स्थितिः समुपतिष्ठते। तदर्थं 'नान्यः पन्था

विद्यतेऽयनाय' इति नियमः पूर्णतया चरितार्थो भवति। ज्ञानं पञ्चधा प्रोक्तम्। सिद्ध्यात्मकं योगात्मकं विषयात्मकं मोक्षात्मकं भक्त्यात्मकं च। एतदेव ज्ञानं विद्या च प्रोच्यते। नारदीयपुराणे (६०।४३) विद्या द्वितीयं चक्षुः प्रोच्यते। मोक्षात्मकं ज्ञानमेवात्र विद्यापदेन व्यपदिष्टमस्ति। आत्मज्ञानमेव सर्वश्रेष्ठम्। इदं सर्वपरित्याग-पूर्वकमिन्द्रियानासक्तस्यैव सम्भवति। अज्ञानादात्मा स्वरूपात्प्रच्युतो जीवभावमु-गुच्छति। मोह-अज्ञान-अविद्या-अविवेक-विपर्ययशब्दाः सन्ति समानार्थाः। ज्ञानद्वारा एषां तिरोभावो भवति। पुरुषः कृत्स्नविद् भूत्वा जगत उदयस्तम्भनादिनाऽविचलितः तिष्ठति। इदमेवात्र कैवल्यस्य स्थितिः। वायुपुराणे 'लिङ्गाभावात्तु कैवल्यं कैवल्यात्तु निरञ्जनम्' (४।१०२।७९)। केवलीभूतः, केवलतां याति, कैवलीभूत्वा केवलतां गत इत्यादिप्रयोगा इमामेवः वस्थां द्योतयन्ति। कैवल्यकेवलीभूतमोक्षशब्दाः सन्ति समानार्थकाः।

आत्मनः स्वरूपानुरूपं सर्वं विकाररहित्यं कैवल्यमुच्यते। अत्रात्मा स्वात्म-रूपेऽवस्थितः तिष्ठति। अतः पुरुषस्वरूपानुरूपं मोक्षस्य स्वरूपं जायते। सांख्यपुरुषः सच्चित्स्वरूपोऽस्ति। मोक्षेऽपि स सच्चित्स्वरूप एव तिष्ठति। एवंस्थितौ सांख्ये आनन्दः पृथङ्नाङ्गीक्रियते, आनन्दोऽस्ति खल्वस्य धर्मः।

त्रिविधदुःखस्यात्यन्तिकसमुच्छेदाय आनन्दराहित्यमपेक्ष्यते अन्यथा

सत्त्वाभिभूते पुनः दुःखादेरुद्भवः स्यात्। अत एव महाभारते (१३।४१।९०) मोक्षः, अदुःखमसुखं वा प्रोक्तः। मोक्षः प्रतिपुरुषं भवति। अत आत्यन्तिकलय एकवारं न भवति, यस्यात्यन्तिकलयो भवति तदर्थं प्रकृतेः सर्वे व्यवहारा निःसारा भवन्ति। एवं विवेचनेन स्पष्टं प्रतीयते यद् आत्यन्तिको लयो मोक्षसमानार्थकः। वामनपुराणे (४३।२९) एवं गुणातीतस्य परिभाषा दत्ताऽस्ति। 'यथा' वारिचरः पक्षी न वियति जले वाचरन् न श्लिष्यते तथा योगी अपि न क्वचन श्लिष्यते।

वायुपुराणे आत्मज्ञानस्य प्रशंसा एवं कृताऽस्ति----

**उत्पत्तिश्च निरोधश्च नित्यं भूतेषु सत्तमाः ।**
**ऋषयोऽत्र न मुह्यन्ति विद्यावन्तश्च ये नराः ।।**
**युगे युगे भवन्त्येते सर्वे दक्षादयो द्विजाः ।**
**पुनश्चैव निरुध्यन्ते विद्वांस्तत्र न मुह्यति ।।**

मुक्तावस्थाया द्योतनार्थ 'भिद्यते हृदयग्रन्थिः' इत्यस्य प्रयोगः पुराणेषु किञ्चित्परिवर्तनेन सह समागतोऽस्ति। श्रीमद्भागवते यथा----

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे ।।**

अस्मिन् प्रसंगे राज्ञो जनकस्यापि भाव उद्धृतोऽस्ति----

मिथिलायां प्रदग्धायां न मे दहति किञ्चन ।

अयमभिप्रायो मिथिलादाहेन जनकस्य न काऽपि हानिर्भवति। मुक्तावस्थाया विचार एवमस्ति वामनपुराणे वायुपुराणे च----

स चापि त्रिविधः प्रोक्तो मोक्षो वै तत्त्वदर्शिभिः ।।
पूर्वं वियोगो ज्ञानेन द्वितीयो रागसंक्षयात् ।
लिङ्गाभावात्तु कैवल्यं कैवल्यात्तु निरञ्जनम् ।।
निरञ्जनत्वाच्छुद्धस्तु ततो नेता न विद्यते ।
तृष्णाक्षयात्तृतीयस्तु व्याख्यातं मोक्षलक्षणम् ।।

तत्त्वसमासे ''त्रिविधो मोक्षः'' (२०) इति सूत्रेण सांख्ये त्रिविधो मोक्षः स्वीकृतः। पुराणेतिहासयोरपि तथैवानुमतः। योगवार्तिकव्याख्यायां २।१८ विज्ञानभिक्षुणापि मोक्षस्य त्रैविध्यमुक्तम्----

आदौ तु मोक्षो ज्ञानेन द्वितीयं रागसंक्षयात् ।
कृच्छक्षयात्तृतीयेन व्याख्यातं मोक्षलक्षणम् ।।

महाभारतस्य शान्तिपर्वणि धर्मध्वजो जनक आत्मनं पञ्चशिखाचार्यस्य शिष्यं सांख्ययोगे मोक्षे च छिन्नसंशयं मन्यमानः पञ्चशिखोक्तां त्रिविधां मोक्षनिष्ठामभ्यधात्----

**मोक्षे हि त्रिविधा निष्ठा दृष्टान्यैर्मोक्षवित्तमैः ।**
**ज्ञानं लोकोत्तरं यच्च सर्वत्यागश्च कर्मणाम् ।।**
**ज्ञाननिष्ठां वदन्त्येके मोक्षशास्त्रविदो जनाः ।**
**कर्मनिष्ठा तथैवान्ये यतयः सूक्ष्मदर्शिनः ।।**
**प्रहायोभयमप्येवं ज्ञानं कर्म च केवलम् ।**
**तृतीयेयं समाख्याता तेन निष्ठा महात्मना ।।**

अयंभावः--- पञ्चशिखस्य परमगुरुर्महर्षिकपिल एवास्ति सांख्यज्ञानप्रवर्तकः। अतो लोकोत्तरज्ञानस्य सम्बन्धः तस्मादेव प्रादुरभवत्। यस्यां निष्ठायां सर्वकर्मणां त्यागो लोकोत्तरस्य च ज्ञानस्य सम्पादनं भवति, सा तृतीया निष्ठा तेनैव महात्मना प्रतिपादिता।

# *चतुर्थोऽध्यायः*

**विषयः= पुराणेषु सांख्यदर्शन विवेचनम्**

त्रिगुणात्मिकायाः प्रकृतेर्महानुत्पद्यते, महतोऽहंकारो जायते, तस्मात् शब्दस्पर्श-रूप-रस-गन्धतन्मात्राणि एकादशेन्द्रियाणि चाविर्भवन्ति। पञ्चतन्मात्रेभ्यश्च आकाश-वायु-तेजोऽनिल-पृथिवीनामकानि पञ्च महाभूतान्युत्पद्यन्ते।

तत्र शब्दतन्मात्रादाकाशं शब्दगुणकमुत्पद्यते। शब्दतन्मात्रसहितात् स्पर्श तन्मात्रात् शब्दस्पर्शोभयगुणको वायुरुत्पद्यते। शब्दस्पर्शतन्मात्रसहिताद् रूपतन्मात्रात् शब्दस्पर्शरूपगुणकं तेज उत्पद्यते। शब्दस्पर्शरूपतन्मात्रसहितरसतन्मात्रात् तद्गुणिकाः शब्दस्पर्शरूपरसवत्य आप उत्पद्यन्ते। शब्दस्पर्शरूपरसतन्मात्रसहितगन्धतन्मात्रात् शब्दस्पर्शरूपरसगन्धवती पृथिवी उत्पद्यते। एवं क्रमेण पूर्वपूर्वानुप्रवेशेनैकद्वित्रि-चतुष्पञ्चगुणकान्याकाशादीनि पृथ्वीपर्यन्तानि पञ्चमहाभूतानि जायन्ते। तथा चोक्तं

सांख्यकारिकायाम्----

प्रकृतेर्महांस्ततोऽहंकारस्तस्माद गणश्च षोडशकः ।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ।।

नारदीयपुराणे च---

वियदेकगुणं प्रोक्तं द्वौ गुणौ मातरिश्वनः ।
त्रयस्तेजसि चत्वारि सलिले पञ्च भूमिगाः ।।

देवीभागवतस्य तृतीयस्कन्धे सप्तमेऽध्यायेऽपि----

आकाश गुणश्चैकः शब्द एव न चापरः ।
शब्दस्पर्शो च वायोश्च द्वौ गुणौ परिकीर्तितौ ।।
अग्नेः शब्दश्च स्पर्शश्च रूपमेते त्रयो गुणाः ।
शब्दस्पर्शरूपसाश्चत्वारो वै जलस्य च ।।
स्पर्शशब्दरसा रूपं गन्धश्च पृथिवीगुणाः ।
एवं मिलितयोगैश्च ब्रह्माण्डोत्पत्तिरुच्यते ।।

### सांख्यसृष्टिक्रमः---

(१) पुरुषः (उदासीनः)

(२) प्रकृतिः (जडा)

(३) महान

(४) अहङ्कारः

| सात्त्विकोऽहंकारः | राजसोऽहंकारः | | तामसोऽहङ्कारः |
|---|---|---|---|
| (५) मनो ज्ञानेन्द्रियाणि च | कर्मेन्द्रियाणि | | पञ्चतन्मात्राः |
| (६) चक्षुः | (११) वाक् | (१६) शब्दतन्मात्रा | (२१)आकाशः |
| (७) श्रोत्रम् | (१२) पाणिः | (१७) स्पर्शतन्मात्रा | (२२) वायुः |
| (८) घ्राणम् | (१३) पादः | (१८) रूपतन्मात्रा | (२३) तेजः |
| (९) जिह्वा | (१४) पायुः | (१९) रसतन्मात्रा | (२४) जलम् |
| (१०) त्वक् | (१५) उपस्थः | (२०) गन्धतन्मात्रा | (२५) पृथिवी |

### तत्त्वगणनाप्रकारः

पुराणेतिहासयोः सांख्यविवेचनस्याधारस्तत्त्वसमासोऽस्ति। तत्र तत्त्वानि षोडशाष्टकरूपेण विभक्तानि सन्ति। अष्टप्रकृतयः षोडशविकाराश्च अचेतनादिनामभिर्व्यपदिष्टाः सन्ति। एभ्योऽतिरिक्तं पञ्चविंशतिकं तत्त्वं पुरुष उच्यते। तथा च प्रकृतिः, महान् , अहंकारः, एकादशेन्द्रियाणि, पञ्चतन्मात्राः, पञ्च महाभूतानि

पुरुषश्चेति पञ्चविंशतितत्त्वानि सांख्यदर्शने प्रसिद्धानि सन्ति। तथा चोक्तं महाभारते-पञ्चविंशतितत्त्वानि प्रवदन्ति मनीषिणः। २३ तत्त्वानि प्रकृतेर्गुणत्वेन स्वीक्रियन्ते। एवञ्च प्रकृति-गुण-पुरुषाणां गणनाऽपि पुराणेतिहासयोः दृष्टिगोचरी भवति। महाभारते षोडशाष्टकरूपेण गणना कृताऽस्ति----

**एताः प्रकृतयाश्चाष्टौ विकारांश्चापि षोडश ।**

**पञ्च चैव विशेषा वै तथा पञ्चेन्द्रियाणि च ।।**

अत्रापि इदमेव स्पष्टम् ३०६।१६ अत्रापि पुरुषातिरिक्तानि २४ तत्त्वानि अचेतनरूपेणोपस्थापितानि सन्ति।

देवीभागवते--- 'चतुर्विंशातिरिक्तोऽस्मि किं मे दुःखं सुखं च किम्'। (५।४।४१) अपि च----

सप्तैकषोडशादिभ्यो विभिन्नोऽहं सदा सुखी। (५।४।४३) द्विर्दादशेभ्यस्तत्त्वेभ्यः ख्यातो वै पञ्चविंशकः। (महाभारते १२।३३९।२३) अत्र चतुर्विंशत्युपस्थापनस्य प्रकारो भिन्नो वर्तते। चेतनाचेतनयोर्विभागस्तु स्पष्ट एव।

शिवपुराणे (२।१।१५) हिरण्याण्डं चतुर्विंशतिसंज्ञकमचेतनं च कथितम्। कूर्मपुराणे----

त्रयोविंशतित्त्वानां गणं युगपदाविशत् ।

तथा च एषु विभाजनेषु यत्र चेतनाचेतनयोराधारः स्वीकृतः, तत्र २४+१=२५ रूपेण पञ्चविंशति तत्त्वानि विभक्तानि। यत्र प्रकृतिविकृत्योराधारस्तत्र षोडशाष्ट-सप्तैकाष्ट-त्रयोविंशत्येक-१६+८=२४, १६+७+१=२४, २३+१=२४ रूपेण विभाजनमुपलभ्यते। श्रीमद्भागवते मनोवैज्ञानिकदृष्ट्या दशैकपञ्चाष्ट-पञ्चपञ्चचतुर्दशः १०+१+५+८=२४, ५+५+४+१०=२४ रूपेणविभागः कृतो विद्यते।

पुराणे महाभारते च यत्र तत्र तत्त्वसंख्यायाः संकेतः २३।२४।२५।२६ रूपेणोपलभ्यते। अत एवाधुनिकेषु विद्वत्सु अनेकविधो विवाद उपतिष्ठते।

पुराणेतिहासयोः अन्तः साक्ष्ये अन्यप्रकारा गणना अपि उपलभ्यते। महाभारते (१३।१११।२९) आत्मा अष्टमं तत्त्वं स्वीकृतम्। (१२।२५२।१०) पञ्चभूत-ज्ञान-भावना-कर्म-मनोबुद्धिभिरात्मा एकादश तत्त्वरूपे वर्णितोऽस्ति। एकादशस्त्वात्मा सर्वदा पर उच्यते। श्रीमद्भागवते----

जगृहे पौरुषं रूपं भगवान् महदादिभिः ।
संभूतं षोडशकलमादौ लोकसिसृक्षया ।।

द्वारा आत्मा सप्तदशं तत्त्वं प्रतिपादितोऽस्ति। ब्रह्मपुराणे (२४१।५४-५८) महाभारते च (१२।३०४।९) एवमुक्तमस्ति----

पञ्चविंशो महानात्मा तस्यैव प्रतिबोधनात्।

लिङ्गपुराणे उत्तरखण्डे दशमाध्याये च पुरुषः प्रकृतिमहदहंकार-एकादशेन्द्रिय-पञ्चतन्मात्रैः सह विशं तत्त्वं स्वीकृतम्। एवमनेकप्रकारकस्य तत्त्वप्रसंख्यानस्य संकेता विभिन्नेषु पुराणेषूपलभ्यन्ते।

## पौराणिकसृष्टिविमर्शः

यद्यपि पुराणेतिहासयोर्बहुविधाः सांख्ययोगसमस्याः प्रश्नरूपेण समुपस्थाप्य विविधैर्विद्वद्भिर्यत्र तत्र समुचितं समाधानं कृतम्। आधुनिके युगेऽपि तत्सम्बन्धे अनेकाः समस्या उपतिष्ठन्ते, यासां समाधानाय च विद्वांसः कृतप्रयत्नाः सन्ति। तत्र पौराणिकसर्गवर्णनमप्यनेकाभिः समस्याभिरावृतमस्ति। तत्समन्वयस्थापना अत्यावश्यकी।

पाश्चात्त्यदेशेषु १८३२ ईशवीयवर्षतः पुराणेतिहासक्षेत्रेऽभिनवपद्धत्या विचारः समारब्धः। सर्गवर्णनविषये सर्वप्रथमं विलहोल्पेननामकेन विदुषा १९०४

ईशवीये स्वकीयो विचारः प्रस्तुतः। भारतवर्षे च डॉ० सुरेन्द्रनाथगुप्तमहोदयेन पुराणानां सृष्टिविज्ञानविषये स्वकीयो विचारो व्यक्तीकृतः। एतत्प्रयासस्योपबृंहणं पुशाल्करप्रीतिभिर्विद्वद्भिः कृतम्। महाभारतसम्बन्धे इ० डब्लू-हायक्रिप्स-डालमन-हाल्ट-ज्मेनानां प्रयासो महत्त्वपूर्णोऽस्ति। डालमनेन १९०२ ईशवीये सांख्यसिद्धान्तं सर्वत्र व्याप्तं प्रदर्शयितुं महान् प्रयासः कृतः। यस्य समालोचना डॉ० कीथप्रभृतिभिर्विद्वद्भिर्विस्तारपूर्वकं कृताऽस्ति। एषां सृष्टिविज्ञानविषये विचारोऽत्यलपोऽस्ति। विचारस्यालपीयत्वेऽपि पुराणविषयकसृष्टिविज्ञानस्यांशिकं रूपं प्रकाशयितुं ते समर्थाः सन्ति। एषां ग्रन्थानामन्तस्तले प्रवेशे स्पष्टं भवति यदेषु सृष्टिविज्ञानस्य विचारो महत्त्वपूर्णो नास्ति, यतो यं सर्वे विद्वांसो न स्वीकुर्वन्ति।[१]

वस्तुतः सृष्टिविषये समन्वयभावनया सर्वान् भारतीयसम्प्रदायानेकतासूत्रे सम्बन्धं पुराणेतिहासयोः सांख्यभित्तौ व्यवस्था कृताऽस्ति। प्रत्येकपुराणेषु यथावसरं सांख्यस्य तत्त्वानां व्यवहारः कृतोऽस्ति। देवतानां स्तुतिष्वपि सांख्यपदावलीप्रयोग-परम्परा पुराणेतिहासयोः प्रचलिता विद्यते।

---

१- पुराणाज् एन्ड देयर कन्ट्रीब्यूशन टू इन्डियन थाट, कल्चरल हेरिटेज आफ इन्डिया भाग-१, पृष्ठ १४८-१६९।

पुराणेतिहासयोर्वैशद्येन सृष्टे वर्णनं विद्यते। पुराणानां पञ्चलक्षणेष्वाद्यं मुख्यं वा लक्षणं सर्गः (सृष्टिः) एवास्ति। पौराणिकसृष्टौ सांख्यदर्शनद्वारा निर्दिष्टायाः सृष्टेर्विशेषाश्रयणमस्ति। सांख्यस्य प्रभावः पुराणेषु विशेषरूपेण दृश्यते। अतः पुराणानां सृष्टिप्रकरणे सांख्यीयसृष्टक्षरशोऽनुकरणं न करोति, परं पौराणिकसृष्टेः किञ्चिन्नैजमस्ति वैशिष्ट्यं स्वातन्त्र्यञ्च। सांख्येन प्रभावितायामपि तस्यां स्वकीयमस्ति व्यक्तित्वम्।

पौराणिकं सांख्यं निरीश्वरदर्शनं नास्ति, किन्तु तदस्ति सेश्वरं सांख्यम्। पुराणेषु सांख्य-वेदान्तमतयोर्न किञ्चिद् वैषम्यं विरोधो वा दृश्यते, यथा दर्शनविकास-क्रमेऽवलोक्यते। तत्र तु सांख्यवेदान्तयोरस्ति मञ्जुलं सामञ्जस्यम्। प्रकृति-पुरुषयो-र्द्वैतप्रतिपादकं सांख्यम्, अद्वयब्रह्मप्रतिपादकेन वेदान्तदर्शनेन सह पौराणिकस्य दर्शनस्य मूलभित्तिं निर्मीमीते। पुराणानुसारं प्रकृतिपुरुषौ न खलु भिन्ने तत्त्वे, प्रत्युत तौ द्वावपि ब्रह्मप्रेरितावेव स्वकार्यसम्पादने समर्थौ भवतः। ब्रह्मः अनयोर्द्वयोरस्ति अध्यक्षः, यद्द्वारा अनयोः कार्यकर्तृत्वं स्फुरति।

सांख्ये सृष्टेर्विकासोऽनयोर्द्वयोः प्रधानपुरुषयोः पारस्परिकप्रभावस्य संयोगस्य वा परिणतं फलम्। सांख्ये इमौ द्वावपि अनादी नित्यौ स्वीकृतौ स्तः, परं पुराणेषु इमौ द्वावपि विष्णोर्द्वे रूपेऽभिमते स्तः। अनयोरुत्पत्तिः विष्णुसत्तायामेवाधारिताऽस्ति।

विष्णुपुराणं स्पष्टं वक्ति यद् विष्णोर्निरुपाधिकात् स्वरूपात् प्रधानपुरुषात्मकं रूपद्वयमाविर्भवति, विष्णोः कालात्मकरूपद्वारा इमौ द्वावपि सृष्टिसमये संयुक्तौ प्रलयदशायाञ्च वियुक्तौ भवतः। भगवान् विष्णुः कालशक्तिद्वारैव सृष्टिप्रलयो करोति।[१]

प्रकृति-पुरुष-व्यक्त-काला एते चत्वारो विष्णो रूपाणि सन्ति। जगत्सृष्टि-र्भगवतो विष्णोः क्रीडाऽस्ति, अन्यथा तस्याप्तकामता भज्येत। प्रायः सर्वेषु पुराणेषु जगत्सृष्टेर्वर्णनमुपलभ्यते। ब्रह्मपुराणे १अध्याये, विष्णुपुराणे प्रथमेंऽशे २-४अध्यायेषु, वायुपुराणे ३-६अध्यायेषु, श्रीमद्भागवते ३स्कन्धे १०,२०अध्याययोः, देवीभागवते ३स्कन्धे १-७अध्यायेषु, नारदीयपुराणे पूर्वार्द्धे ४२अध्याये, मार्कण्डेयपुराणे ४७-४८अध्याययोः, भविष्यपुराणे वैष्णवपर्वणि ५-६अध्याययोः, प्रतिसर्गपर्वणि च ५-१०अध्यायेषु, कूर्मपुराणे पूर्वार्द्धे ४,१०अध्याययोः, गरुडपुराणे पूर्वखण्डे ४अध्याये, मत्स्यपुराणे २-३अध्याययोः, हरिवंशे च हरिवंशपर्वणि च १-३ अध्यायेषु सृष्टेर्विशषवर्णनं दृष्टिगोचरीभवति।

पुराणेषु सांख्यदर्शनस्य व्यापकः प्रभावो दृश्यते। पुराणानामनुशीलनेन स्पष्टं सिध्यति यद् अग्नि-सूर्य-विष्णु-श्रीमद्भागवतपुराणेषु सांख्यप्रक्रियाया बहुश

---

१- विष्णोः स्वरूपात् परतो हि ते द्वे रूपं प्रधानं पुरुषश्च विप्र ।
तस्यैव तेऽन्येन धृते वियुक्ते रूपान्तरं तद् द्विज कालसंज्ञम् ।।

आश्रयणं कृतमस्ति। एषु तत्तदध्यायेषु सृष्टिप्रलयोर्वर्णनावसरे सांख्यप्रक्रिया दृश्यते। कूर्मपुराणे १, ४, ६, १६, विष्णुपुराणे १, २, २९-३७, अग्निपुराणे १७।१-७, २०।१-८ श्रीमद्भागवते च ३स्कन्धे सांख्यप्रक्रियाया दर्शनं भवति।

सर्गस्तावत् त्रिविधः--- प्राकृतसर्गः, वैकृतसर्गः, प्राकृतवैकृतसर्गश्च। तत्र प्राकृतसर्गस्त्रिविधः, वैकृतसर्गः पञ्चविधः, प्राकृतवैकृतसर्गश्चैकविधः कौमारसर्ग एको भवति। एवं पुराणेषु सृष्टेः ९प्रकारा निर्दिष्टाः सन्ति। तदुक्तं मार्कण्डेयपुराणे-

**पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः ।।**
**प्राकृतो वैकृतश्चैव कौमारो नवमः स्मृतः ।**
**इत्येते वै समाख्याता नव सर्गाः प्रजापतेः ।।**

तत्र प्राकृतसर्गो बुद्धिपूर्वको भवति, यतो हि तस्य सर्गस्य सृष्टिर्नैसर्गिकरूपेण जायते। तदर्थं ब्रह्मणो बुद्धियोगस्यावश्यकता न भवति। तद्विपरीतो वैकृतसर्गो बुद्धिपूर्वको भवति। अर्थाद् ब्रह्मा स्वबुद्ध्या सम्यग् विचार्य सर्गममुं निर्मीते। यथा चोक्तं शिवपुराणे वायवीससंहितायाम्----

**प्राकृताश्च त्रयः पूर्वे सर्गास्तेऽबुद्धिपूर्वकाः ।**
**बुद्धिपूर्वं प्रवर्तन्ते मुख्याद्याः पञ्च वैकृताः ।।**

(क) ब्राह्मसर्गः, (ख) भूतसर्गः (ग) वैकृतसर्गश्च ।

(क) तेषु महत्तवस्य सर्गो ब्राह्मसर्गः प्रोच्यते, यतो हि---

**मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।**
**सम्भवः सर्वभूतानां ततो भवति भारत ।।**

इति भगवद्गीतावचनानुसारं ब्रह्म महत्तत्त्वस्यैवास्ति बोधकम्। सांख्यसिद्धान्तानुसारं महत्तत्त्वमेव प्रकृतिपुरुषसंयोगस्य प्रथमः परिणामोऽस्ति। एतदेव मतमत्रापि स्वीकृतम्।

(ख) पञ्चतन्मात्राणां सृष्टिर्भूतसर्गनाम्ना व्यवह्रियते, यतो हि पञ्चतन्मात्राः पृथिव्यादीनां पञ्चमहाभूतानामत्यन्तं सूक्ष्मावस्थाया द्योतिकाः सन्ति। इमाश्च सांख्ये विशेषनाम्नापि प्रख्याताः सन्ति।

(ग) इन्द्रियसम्बन्धिनी सृष्टिर्वैकृतसर्गः प्रोच्यते। अत्र सांख्याभिमतप्रक्रिया पुराणानामप्यस्ति अभिमता, यतोऽहङ्कारस्य तामसरूपेभ्यस्तन्मात्राणामाविर्भावो भवति। सात्त्विकरूपेभ्य इन्द्रियाण्युत्पद्यन्ते। राजसरूपाण्युभयसृष्टौ समानरूपेण क्रियाशीलानि भवन्ति। अतस्तेभ्यः कस्यचित् पदार्थस्याविर्भावो न भवति। पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, उभयात्मकमेकं मनश्चेति सन्ति इमानि एकादशेन्द्रियाणि।

(१) **मुख्यसर्गः**--- सर्गादौ ब्रह्मद्वारा पूर्ववत् सृष्टिरचनाचिन्तने प्रथमबुद्धिपूर्विका सृष्टिराविर्भवति। पुनर्ब्रह्मणा ध्याने क्रियमाणे ब्राह्याभ्यन्तरज्ञानशून्या तमोमयी जडात्मिका वृक्ष-गुल्म-लता-तृण-वीरुधरूपा नगादिजडपदार्थानां सृष्टिर्जायते। जडसृष्टिरियं मुख्यसर्गनाम्नाभिहिता। यतो हि भूतले चिरस्थायितादृष्ट्या पर्वतानामस्ति मुख्यता-- मुख्या वै पर्वताः स्मृताः (विष्णुपुराणे १।५।२१)।

(२) **तिर्यक्सर्गः**--- पूर्वोक्तां सृष्टिं पुरुषार्थेनुपयोगिनीं मत्वा ब्रह्मणा पुनर्ध्याने क्रियमाणे तिर्यग्योनिजीवानामुत्पत्तिर्जायते। तिर्यग्योनिजीवा वायुवत् तिर्यग्गतयो भवन्ति। सर्वेऽस्मिन् पशु-पक्षिणः समागच्छन्ति। इमे प्रायः तमोमया विवेक-हीना साधनविहीना अज्ञाने ज्ञानमानिनः, अहङ्कारिणः अन्तः प्रकाशाश्च भवन्ति। स्थावरसृष्टे-रनन्तरं जङ्गमसृष्टेरिदं प्रथमं रूपमस्ति।

(३) **देवसर्गः**--- परमापुरुषार्थमोक्षसाधिकायाः सृष्टेः परमप्रियत्वात् तिर्यग्योनिसृष्ट्या अपि अतुष्यन् प्रजापतिः पुनर्देवान् ससर्ज। अयं सर्ग ऊर्ध्वलोकनिवासी सात्विकवर्गोऽस्ति, यो विषयसुखप्रधानो बाह्याभ्यन्तरज्ञानसम्पन्नोऽस्ति।

(४) **मानुषसर्गः**--- पुरुषार्थस्यासाधकत्वेन देवसर्गादपि अतुष्यता सत्यसंकल्पेन ब्रह्मणा पुनर्ध्यानादेव प्राणिवर्गो निर्मितः। यत्र सत्त्वरजस्तमसां त्रयणां

गुणानामाधिक्यं विद्यते। अतस्तत्र तमस उदेशादेष सर्गो दुःखबहुलः, रजस उद्रेकात् क्रियाशीलः, सत्त्वोद्रेकाच्च बाह्याभ्यन्तरज्ञानसम्पन्नो भवति। अस्य वर्गस्य प्राणी मनुष्य उच्यते। अतोऽयं सर्गः मानुषसर्गः कथ्यते। तदर्थं विष्णुपुराणे १अंशे ५अध्याये १५-१८श्लोकाः द्रष्टव्याः।

(५) **अनुग्रहसर्गः**--- प्रकृत्यनुग्रहाज्जायमानत्वादयमनुग्रहसर्गः प्रोच्यते। मार्कण्डेयपुराणे ४७।२२-२९ विपर्यय-सिद्धि-शान्ति-तुष्टिभेदाद् अनुग्रहसर्गः चतुर्वा भिद्यते। तत्र विपर्ययः स्थावरेषु, शक्तिस्तिर्यगयोनिषु, सिद्धिः मनुष्येषु, देवेषु च तुष्टिस्तिष्ठतीति व्यवस्थापितम्। सांख्यकारिकायागयं सर्गः विपर्ययशक्ति-तुष्टिसिद्धिनाम्ना प्रख्यातोऽस्ति (४६) वायुपुराणानुसारं प्राकृतसर्गोऽप्ययं प्रोच्यते।

कौमारसर्गः--- अयमन्तिमः सर्गः प्राकृत-वैकृतोभयात्मक एक एवाभिमतोऽस्ति----

अव्यक्तं कारणं यत्तु नित्यं सदसदात्मकम् ।
इत्येषोऽनुग्रहः सर्गो ब्रह्मणः प्राकृतस्तु यः ।।[१]

---

१- वायुपुराणे ९।११७।

अस्य सर्गस्योभयात्मकत्वे टीकाकारणां मतैक्यं नास्ति। विश्वनाथचक्रवर्ती श्रीमद्भागवतस्य (३।१०।२२) व्याख्यायां कुमाराणां सर्गः भगवद्ध्यानजन्यो भगवज्जन्यश्चेति स्वीकृत्यास्योभयात्मकत्वं स्वीकृतवान्। वल्लभाचार्यः सुबोधिन्यां कुमारान् देवान् मानुषांश्चेत्युक्तवा द्विविधत्वमुपपादितवान्। निम्बार्काचार्याऽनुयायिना शुकदेवाचार्येण च ज्ञानभक्तिसम्प्रदायप्रवर्तका इमे ब्रह्मणा उत्पन्ना अपि प्रत्यहं प्रादुर्भवन्तीति हेतोः चिरस्थायिषु अन्यतमाः परिगणिताः। अतो द्विविधा अंगीकृताः प्राकृता वैकृताश्च।

ब्रह्मणा निर्मितऽस्मिन् जगति इदमस्ति वैशिष्ट्यं यद् येषां यथा स्वभावः, यादृशी च प्रकृतिः पूर्वकल्पे आसीत् तथैवास्मिन् कल्पेऽपि भवति।

अतस्तद्भावभाविता जीवा हिंसकमृदुधर्माधर्मसत्यानृतप्रवृत्तयो भवन्ति।

येषां ये यानि कर्माणि प्राक् सृष्ट्यां प्रतिपेदिरे ।
तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः ।।
हिंस्रहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृतौ ।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ।।[1]

---

१- विष्णुपुराण १।५।६०-१।

"धाता यथा पूर्वमकल्पयत्" इति श्रुत्या यद्यस्य सोऽधात्सर्गे तत्तस्य स्वयमाविशत् (१।२९। मनुस्मृतिः) इत्यनेन तथैव समर्थितम्। एवं पुराणदृष्ट्या कर्मानुसारिणी सृष्टिरित्यव्याहतः पन्थाः।

एवमेव ब्राह्मी सृष्टिः, रौद्री सृष्टिः, मानसी सृष्टिश्च पुराणेषु वर्णिताऽस्ति---

**प्रजापतिरिदं सर्वं मनसैवासृजत्प्रभुः ।**
**तथैव देवान् कवयस्तपसा प्रतिपेदिरे ।।**
**आदिदैवसमुद्भुता ब्रह्मूलाक्षयाव्ययाः ।**
**सा सृष्टिमानसी नाम धर्मतन्त्रपरायणा ।।**

प्रधानतः सृष्टिर्ब्रह्मण एव कार्यमस्ति। सृष्टिकामनायां सत्यां विष्णोर्नाभिकमलत आविर्भूय ब्रह्मा अगोचरया वाचा तपोऽर्थं प्रेरितः शतवर्षं तपस्याऽनन्तरं प्राप्तसामर्थ्यः विशालस्यास्य विश्वस्य निर्माणे प्रवर्तते।

भारतीयषड्दर्शनेषु सांख्यस्य प्रभावः सृष्टिप्रक्रियायां विपुलो जातः। तत्त्वानां मीमांसा सांख्यस्य महद्वैशिष्टमस्ति। सांख्यस्य पौराणिकसृष्टौ पूर्णः प्रभावोऽस्ति, परन्तु तस्याक्षरशः पालनं पुराणं न करोति। सांख्यं प्रकृतिपुरुषौ मूले तत्त्वे स्वीकरोति, परन्तु पुराणदृष्ट्या उभावपीमौ परमात्मन एवोत्पद्येते, प्रलयदशायां तत्रैव च विलीयेते।

प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी ।

पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ।।

परमात्मा च सर्वेषामाधारः परमेश्वरः ।

विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ।।

सांख्यमाधारं मन्यमानाऽपि पौराणिकी सृष्टिः स्वमौलिकता मण्डितैवास्ते।

पुराणेषु सांख्य-प्रक्रियया कश्चिदधिदेवं पुरुषं तच्छक्तिं स्त्रियं च मत्वा उभयोः संश्लेषात् सृष्टिवर्णनं कृतम्। एवमेव प्रारम्भत एव मैथुनसृष्टिः स्वीकृता। ब्रह्मवैवर्तपुराणे कृष्णः पुरुषः, राधा च स्त्री स्वीकृता। राधागर्भत एव ब्रह्माण्डस्योत्पत्ति-र्वर्णिता। एवमन्यपुराणेष्वपि अन्यानधिदेवान् मत्वा सृष्टिवर्णनमुपस्थापितमस्ति। संकल्प-दृष्टि-वाक्-हस्त-आश्लेष-द्वन्द्व-क्रमेण शरीरोत्पत्तिः पुराणेषु वर्णिताऽस्ति। किञ्चोद्भिज्जस्वेदजाण्डजजरायुजभेदात् चतुर्विधशरीरातिरिक्ता सांकल्पिकसांसिद्धिक-शरीरयोरपि स्वीकारः कृतोऽस्ति। अतोऽनेकविधसंशयस्य समुच्छेदाय आध्यात्मिका-धिदैविकाधिभौतिकसर्गाणां क्रमिकरूपेणोपस्थापनमनिवार्यतया अपेक्षितमस्ति। पुशाल्करेण पौराणिकसृष्टिविज्ञानविषये विचारं कुर्वता वायुपुराणं विष्णुपुराणमनु-यायीति कथयित्वा शैली अस्पष्टा अनियता अयुक्ता च प्रोक्ता, तन्न युक्तम् , वायुपुराणं महाभारतादपि अति प्राचीनम्। अस्य सर्गवर्णनं सर्वाधिकं विस्तृतं स्पष्टश्चास्ति। अन्येषु पुराणेषु वर्णितः सर्गविचारस्तु अत्रास्त्येव। अनेकाः समस्याः स्पष्टयितुं तत्त्वानां स्वरूपं च निरूपयितुमन्यवर्णनमभ्युपस्थापितम्। अत्र प्रक्रियापादे ४-६ अध्यायेषु

नवविधसर्गैस्त्रिविधप्रतिसर्ग-संसारगतीनां यथातथ्यवर्णनमुपक्रम्य प्रकृतेः सविस्तरं व्याख्यानं कृतमस्ति। तदनन्तरं तस्या विकास उपस्थापितः।

**उपास्य रजनीं कृत्स्नां परां माहेश्वरीं तथा ।**
**अहर्मुखे प्रवृत्ते च परः प्रकृतिसम्भवः ।।**

पुरुणेषु क्षोभ्यमाणायाः प्रकृतेः महान् विकसितः। स्वकारणावृतमहतः त्रिविधाहंकारो विकसति। भूतादेरहङ्काररूपपञ्चतन्मात्राः तैजसादिन्द्रियवर्गोः वैकारिकादहंकाराच्च इन्द्रियाधिष्ठातृदेवता विकसिता, पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानां विकासो जायते। एषां समेषां तत्त्वानां क्रमस्तथा व्याख्यानं सर्वाधिकं स्पष्टमस्ति। इमे पृथक्-पृथक् स्थिताः प्रजासर्गे समर्थाः सन्ति। अतः क्षेत्रज्ञस्याधिष्ठातृत्वे अव्यक्तानुग्रहेण एषां संश्लेषणं जायते। येनैकं हिरण्याण्डं प्रादुर्भवति।

हिरण्याण्डं सर्वभूताधिष्ठानं सप्तभिरावरणैः समावृतम्। एतदेव सप्ताण्डं कारणं कथ्यते। एतावद् वर्णनं प्राकृतसर्गनाम्नोपस्थापितं विद्यते। प्राकृतसर्गः क्षेत्राधिष्ठितोऽबुद्धिपूर्वकः तडिदिवाभिव्यक्तः। एतत्सर्वं दिवास्थितं अहरन्ते प्रलीनं च कथितम्। सर्गकाले क्षोभ्यमाणेभ्यो गुणेभ्यः त्रिदेवोऽभिव्यक्तः। एषां पारस्परिकं सम्बन्धं निरूप्य आत्मनो नारायणादेश्च व्याख्यानं जातमस्ति। ब्राह्मसर्गस्य वर्णने पूर्वं सृष्टिरचनायै तमोमोहादिकं ब्रह्मण उत्पन्नमिति कथितम् , यदविद्यायाः पञ्चरूपाणि

कथितानि। इतोऽनुग्रहसर्गपर्यन्तस्य वर्णनं पुराणेषु समानरूपेणोपलभ्यते। एवंविधं वर्णनं विष्णु-ब्रह्माण्डकूर्म-पद्म-मार्कण्डेयपुराणेष्वपि प्राप्यते। नारदीये पुराणे संक्षिप्तं वर्णन पूर्वोक्तवर्णनानुरूपमेवास्ति। यद्यपि अत्र नवसर्गाणां वर्णनं स्पष्टं नास्ति, तथापि तत्संकेतप्राप्तयेऽत्र पर्याप्ता सामग्री समुपलभ्यते। अग्निपुराणे २०।६ नव सर्गा जगतो मूलहेतवः कथिताः। श्रीमद्भागवते च दशविधानां सर्गाणां वर्णनमेवमुपलभ्यते।

**सर्गो नवविधस्तस्य प्राकृतो वैकृतस्तु यः ।**
**आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः ।।**
**द्वितीयस्त्वहमो यत्र द्रव्यज्ञानक्रियोदयः ।**
**भूतसर्गस्तृतीयस्तु तन्मात्रो द्रव्यशक्तिमान् ।।**
**चतुर्थ ऐन्द्रियः सर्गो यस्तु ज्ञानक्रियात्मकः ।**
**वैकारिको देवसर्गः पञ्चमो यन्मयं मनः ।।**
**षष्ठस्तु तमसः सर्गो यस्त्वबुद्धिकृतः प्रभो ।**
**षडिमे प्राकृताः सर्गा वैकृतानपि मे शृणु ।।**
**सप्तमो मुख्यसर्गस्तु षड्विधस्तस्थुषां च यः ।**
**तिरश्चामष्टमः सर्गः सोऽष्टाविंशद्विधो मतः ।।**
**अर्वाक्स्रोतस्तु नवमः क्षत्तुरेकविधो नृणाम् ।**
**वैकृतास्त्रय एवैतं देवसर्गश्च सत्तम ।।**

वैकारिकस्तु यः प्रोक्तः कौमारस्तूभयात्मकः ।

दशैते विदुराख्याताः सर्गास्ते विश्वसृक्कृताः ।।

अत्र ६प्राकृताः, ३वैकृताः, एकः कौमार इति दशसर्गाः कथिताः। अन्य पुराणेषु एतद्विपरीताः ३प्राकृता, ६वैकृताः सर्गाः कथिताः। सर्वेषु पुराणेषु मनुष्योऽन्ते कथितः। लिंगपुराणे केवलं पदावलीभेदोऽस्ति, भावस्तु समान एव।

ब्रह्मणो महतस्त्वाद्यो द्वितीयो भौतिकस्तथा ।

सर्गस्तृतीयश्चैन्द्रियस्तुरीया मुख्य उच्यते ।।

तिर्यग्योन्यः पञ्चमस्तु षष्ठो दैविक उच्यते ।

सप्तमो मानुषो विप्रा अष्टमोऽनुग्रहः स्मृतः ।।

नवमश्चैव कौमारः प्राकृता वैकृतास्त्विमे ।

एवंविधवर्णनं वायु-ब्रह्माण्डानुरूपमस्ति। भविष्यपुराणे (२।५८।५) मनुः विराडुक्तः। एतेन वर्णनेन शतरूपा मनोर्जननी सिध्यति। अन्यपुराणेषु नैवंविधं वर्णनं विद्यते। प्रायो दक्षिणवामाङ्गाभ्यां स्वयम्भुवमनोः शतरूपायाश्च उत्पत्तिरुक्ता। आभ्यां प्रियव्रतोत्तानपादौ द्वौ पुत्रौ एका कन्या च समुत्पन्ना इति वर्णनमस्ति। कन्येयं दक्षस्य पत्नी बभूव। ततस्तस्याम् २४कन्याः समुत्पन्नाः। पुनरुत्तानपादस्य वंशावल्यामपि दक्षप्राचेतसनाम्ना एकस्य दक्षस्य वर्णनं विद्यते। अस्य ६०कन्यासु १३मासीचकश्यपस्य पत्न्योऽभवन्। आभ्य एव दित्यदैव्यदानवमानवपशुपक्षि-

प्रभृतीनां विकासो जातः। इत एव मैथुनी सृष्टिरारब्धा। पद्मपुराणे १।६ दक्षप्राचेतसानन्तरं मैथुनी सृष्टिरुक्ता-- 'दक्षप्राचेतसादूर्ध्वं प्रजामैथुनसम्भवाः'।

एवंविधवर्णनेषु दक्षस्य असिक्नी-वारिणी नाम्न्यौ द्वे पत्न्यौ अभिमते स्तः। आभ्यां हर्यश्व-शबलाश्वाभिधानां पुत्राणामुत्पत्तिरुक्ताऽस्ति। इमे नारदोपदेशाद् विरक्ता अभवन्। तदनन्तरं दक्षेण वारिण्याम् ६०कन्या उत्पादिताः (१।६।१२)। तदधिष्ठातृत्वे सृष्टौ प्रवृत्तिरुक्ता। ब्रह्माण्डपुराणे (२।३७।२५-४२) अस्य विस्तृतं वर्णनं दक्षद्वाराऽपि मानसी मैथुनी चेति द्विविधा सृष्टिरुक्ता। वायौ ब्रह्मपुराणयोः मानसपुत्रेषु दक्षस्य गणना समयेऽयं प्राणादुत्पन्नः प्रोक्तोऽस्ति। मत्स्यपुराणेऽयं ब्रह्मणो दक्षिणपादाङ्गुष्ठादुत्पन्नः प्रोक्तः। एवं मैथुनसृष्टिप्रारम्भे मनुशतरूपा दक्षसम्बन्धे बहुविधं वैषम्यं विद्यते। मानससर्गानन्तरं मैथुनसृष्टिः सर्वत्र समानैवास्ति।

ब्राह्मसर्गविवेचने ब्रह्मणो द्विविधस्य मानसपुत्रस्य विचारो महत्त्वपूर्णोऽस्ति। एतदनन्तरमेव मैथुनसृष्टिप्रारम्भोऽभवत्। इमौ वीतरागौ प्रवृतिमार्गिणौ प्रोक्तौ। प्रथमः कविः, द्वितीयः प्रजापतिरिति नाम्नाऽभिहितौ स्तः। तत्र स्वयम्भुवमनुः प्रजापतिः, स एव विराड् आदिपुरुषश्च प्रोक्तः। पुरुषसूक्ते (१।९) 'ततो विराडजायत।' एवं विराड्ब्रह्मणोऽभिन्नः। पुराणानुसारं ब्रह्मा विराड्जनकोऽस्ति। स्वायंभुवं मनुं विराजं कथयित्वा तन्महत्त्वं प्रतिपादितम्। कार्यकारणयोरभेदेन मनुः विराडुक्त। ब्राह्मसर्गप्रसंगे

ब्राह्मणः प्रवृतिमार्गिणां पुत्राणां स्थितिद्योतनार्थं प्रजापति-मनुशब्द प्रयोगो जातः।

ब्राह्मे सर्गे सर्वोऽपि विकासः ब्रह्मणः शरीरादुक्तः। यतो हि सर्वेषां विग्रहस्योपादानं कारणं ब्रह्मणः शरीरमेवास्ति। वायु-ब्रह्माण्ड-वाराह-पद्म-गरुडपुराणेषु देवासुरपितृमनुष्ययक्षराक्षस्-गन्धर्व-पशु-पक्षि-सरीसृप-स्थावरादीनां सृष्टिवर्णनं समानैव शब्दैः कृतमस्ति। गरुडपुराणे वर्णनमिदमपेक्षाकृतं संक्षिप्तमस्ति, यतोऽत्र पदानां निर्वचनमत्यल्पमस्ति। ब्राह्मसर्गवर्णनप्रसंगे अनेकेषु पुराणेषु समानाः श्लोका उपलभ्यन्ते।

मत्स्यपुराणे (२।२९-३१) मैथुनसृष्टेः निरूपणं सांख्यसिद्धान्तानुसारमेव कृतमस्ति। यदा ब्रह्मा देवसर्गमप्युत्पाद्य नातुष्यत्तदनन्तरं तेन अर्वाक् स्रोतो मानवसृष्टिं विधाय सन्तोषो लब्धः।

**सृष्ट्वा पुराणि विविधान्यजयात्मशक्तया**
**नाना सरीसृपपशून् खगदंशमत्स्यान् ।**
**तैस्तैरतुष्टहृदयः पुरुषं विधाय**
**ब्रह्मावलोकधिषणं मुदमाप देवः ।।**

ब्राह्मसर्गोऽर्णवावस्थानन्तरमुपतिष्ठते। अत एवायं प्रायो नारायणेन सम्बद्धोऽस्ति।

अस्य वर्णनोपक्रमे विष्णुपुराणे प्रोक्तमस्ति----

**आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।**

**अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ।।**

इति श्लोकमुद्धृत्य नारायणशब्दस्य व्युत्पत्तिः प्रदर्शिताऽस्ति। वामनपुराणे च-

**इदं चोदाहरंस्तत्र श्लोकं नारायणं प्रति ।**

**आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।।**

**तासु शेते स यस्माच्च तेन नारायणः स्मृतः ।**

महाभारते च भगवतो नारायणस्यैव निर्वचनं कृतं विद्यते।

**नराणामयनं ख्यातमहमेकः सनातनः ।**

**आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।**

**अयनं मम तत्पूर्वमतो नारायणो ह्यहम् ।।**

पद्मपुराणे नारायणपदस्य निर्वचनं बहुप्रकारकं कृतमस्ति। अत्र नारायण-पदव्याख्या वायुपुराणव्याख्यातोऽनुपमाऽस्ति। अत्र नारायणत्रिदेवरूपे व्याख्यातः। वायुपुराण आध्यात्मिकं वर्णनमस्ति। वायुब्रह्माण्डमार्कण्डेयेषु ब्रह्मा नारायणाख्यस्तु

इत्युक्त्वा नारायणो ब्रह्मणो भिन्नः साधितः। वायुपुराणे २ २ ८ अध्याये, ब्रह्माण्डे च नारायणं ब्रह्मसर्गेण संबद्धं कृत्वा नारायणः स्पष्टतया ब्रह्मणः श्रेष्ठः प्रोक्तः।

कूर्मपुराणे ब्रह्मणः सर्वाधिकं प्राधान्यं प्राप्तमस्ति। अस्यैव शरीरं सर्वविध-शरीराणामुपादानमस्ति। अयं चराचरस्य जगतोऽस्ति स्त्रष्टा। विष्णुपुराणे (१।५।४०) पद्मपुराणे (१।३।९६), गरुडपुराणे (४।२७) च समानः श्लोको मिलति। वाराहे १ २।५०), ब्रह्माण्डे (२।८) मानवो मननशीलत्वान्मनुष्याः प्रोक्ताः। ब्रह्मपुराणे बाह्मसर्गस्य संक्षिप्तं वर्णनं वर्तते (४५।३०)। एवं ब्रह्मणो द्विधा भवनात् मैथुनीसृष्टिरुपस्थापिता।

एवमन्यपुराणेषु ब्रह्मणः सव्यापसव्याभ्यामङ्गीयां नरनारीसमुत्पत्तिं वर्णयित्वा तेभ्यो मैथुनसृष्टिपरम्परा कथिता। वायुपुराणे नवसर्गवर्णनानन्तरं द्विविधमानसपुत्राणां चर्चाऽस्ति। ततो मैथुनसृष्टिः कथिता। मत्स्यपुराणस्य तृतीयेऽध्याये भगवता मनुना पृष्टो भगवान् मत्स्यः प्रोक्तवान् यत् सत्त्वं रजस्तमश्चेति त्रयो गुणाः सन्ति। एषां साम्यावस्था प्रकृतिरुच्यते। तां केचित् प्रधानमपरे चाव्यक्तं जगुः। एषैव प्रजासृष्टिं करोति विकरोति च। सविकारात् प्रधानात् महत्तत्त्वं प्रजायते। महतो मानवर्द्धनोऽहंकारो जायते, तत एवाहङ्कारद् दशेन्द्रियाणि मनश्च जायन्ते। तेषु बुद्धिवशानि श्रोत्र-त्वक्-चक्षुः जिह्वानासिकाख्यानि पञ्चेन्द्रियाणि ज्ञानेन्द्रियाणि कथ्यन्ते। शेषाणि कर्मवशानि

वाक्पाणिपादपायूपस्थानि पञ्चकर्मेन्द्रियाणि प्रोच्यन्ते।

एषां दशानमिन्द्रियाणां कर्माणि क्रमशः शब्द-स्पर्श-रूप-रस-गन्ध-आलाप-आदान-गमन-उत्सर्ग-आनन्दाः सन्ति। एकादशं मनो नामकमिन्द्रियमस्ति, यत्र कर्मेन्द्रियाणां ज्ञानेन्द्रियाणाञ्च गुणाः प्राप्यन्ते। सूक्ष्मा इन्द्रियावयवाः तस्य मूर्ति समाश्रयन्ति। अतस्ते तन्मात्रा इत्युच्यन्ते। येन तन्मात्रा आश्रियन्ते तच्छरीरमुच्यते। शरीरे निवासाद् जीवात्मा शरीरी कथ्यते। सिसृक्षया चोद्यमानं मन एव सृष्टिं प्रारभते। शब्दतन्मात्रात् शब्दगुणकमाकाशमुत्पद्यते। तत आकाशविकृतेः शब्दस्पर्शोभयात्मको वायुरुत्पद्यते। वायोः स्पर्शतन्मात्रात् तेजस आविर्भावो भवति। शब्दस्पर्शरूपाणां त्रयाणां विकाराणां संयोगात् तत्त्रिगुणात्मकं जायते। तस्मात् त्रिगुणात्मकात्तेजोविकारस्य रसतन्मात्रस्य चाश्रयेण चतुर्गुणं जलमुत्पद्यते। चतुर्गुणस्य वायोर्गन्धतन्मात्रस्य चाश्रयेण पञ्चगुणात्मिका पृथ्वी जायते। तत्तत्तन्मात्रसंमतत्वात्ते आकाशादयः तत्तद्गुणप्रधाना उच्यते।

एभिः पञ्चज्ञानेन्द्रिय-पञ्चकर्मेन्द्रिय-पञ्चमहाभूत-पञ्चतन्मात्र-मनोबुद्ध्यहङ्कारा-व्यक्तसंज्ञकैः चतुर्विंशतितत्त्वैः सम्पादितं सुखदुःखात्मकं कर्म पञ्चविंशः पुरुषो भुङ्क्ते। ब्रह्मज्ञानिन एवं पुरुषमपीश्वराधीनत्वाज्जीवात्मानं कथयन्ति। एवं षड्विंश-प्रकारकं शरीरं तत्त्वमित्युच्यते। कपिलादिभिः सांख्यशास्त्रस्यचार्यैः स्वग्रन्थेषु एषामेव

तत्त्वानां परिगणनं कृत्वा विवेचनं कृतमस्ति। एषामेव तत्त्वानामाश्रयेण ब्रह्मणा जगतः सृष्टिः क्रियते।

शिवपुराणस्य उमासंहितायां ३६ अध्याये भगवत्याः पार्वत्याः कालजयोपायाविषयके प्रश्ने कृते सति भगवान् सदाशिवोऽब्रवीत्-यदिदं पाञ्चभौतिकं शरीरं पञ्चानां भूतानां गुणैर्युक्तमुत्पद्यते, तेषु च विलीयते। आकाशाद् वायुरुत्पद्यते, वायोस्तेजस्तत्त्वमाविर्भवति, तेजसो जलमुद्भवति, जलात् पृथ्वी उत्पद्यते। पृथिव्यादीनि पञ्चमहाभूतानि क्रमशः स्वे स्वे कारणे विलीयन्ते। पृथिव्यां पञ्च, जले, चत्वारः, तेजसि त्रयः, वायौ द्वौ, आकाशे केवलशब्दमात्रमेको गुणो विद्यते। शब्द-स्पर्श-रूप-रस-गन्धाः पञ्च गुणाः सन्ति। यदा भूतान्यात्मनो गुणान् परित्यजन्ति, तदा नश्यन्ति। यदा च गुणानां ग्रहणं कुर्वन्ति, तदा उत्पद्यन्ते। एवं पञ्चानां भूतानां यथार्थस्वरूपं ज्ञात्वा ध्यानपरायणो योगवित् सुखपूर्वकं कालं जयति। पुराणेषु सर्वत्र समानरूपेण हिरण्याण्डस्य वर्णनं विद्यते। अस्य द्विधा विभक्तस्य चर्चाऽपि सर्वत्र विद्यते।

वायुपुराणे हिरण्याण्डवर्णनं सांख्यानुसारि साधयितुं प्रयासः कृतोऽस्ति। ब्रह्मपुराणे हिरण्याण्डस्य विभाजको ब्रह्म प्रोक्तः। अस्योभे खण्डे दिवस्पृथिव्यौ सामान्यतया स्वीकृतौ स्तः। भविष्यपुराणस्य (२।९।१४) एतत्प्रकारकं वर्णनं

मनुस्मृतेः प्रथमाध्यायस्यास्ति अक्षरशोऽनुवादः। एवं हिरण्याण्डस्य खण्डद्वये विभागः तथा ततो द्यावापृथिव्योर्निर्माणमाध्यात्मिकमस्ति। वायुब्रह्मपुराण-योरप्याध्यात्मिकसर्गसम्बन्धे पर्याप्तं साम्यमस्ति। द्वयोः पुराणयोः सर्गवर्णनं सङ्कत्पाद् दर्शनात् , स्पर्शात् , उत्पत्तिश्च, निरोधश्च, इत्यादिकथनैः संयुक्तं कृतमस्ति। वायुपुराणे(२।६३।४५-५१), ब्रह्मपुराणे (२।५०-५५) सांख्यतत्त्वानां विस्तृतं व्याख्यानं कृत्वा प्राकृतिक ब्राह्मरूपेण सर्गः समुपस्थापितः, परं ब्रह्मवैवर्तपुराणे सर्गवर्णने सांख्यतत्त्वानां व्याख्यानं नास्ति। यतो हि सर्गवर्णने केवलं ब्राह्मसर्ग एव स्थानद्वये समुपस्थापितोऽस्ति। प्रथमे द्वितीयाध्याये च हिरण्याण्डस्य खण्डद्वयतः आरभ्य चराचरस्य जगतो विकासः प्रवृत्तोऽस्ति। ब्रह्मसर्गनिरूपणं नारायणस्य महत्त्वं प्रकाशकानायास्ति। एवं प्रथम द्वितीयाध्यायवर्णितसर्ग एव आध्यात्मिकरूपेण वायुपुराणे समुपस्थापितो ब्राह्म सर्गेण साम्यं भजते। अत्र सर्गवर्णने शुद्धमाध्यात्मिकं प्रतीयते, यतोऽत्र तत्त्वानां रूपे क्रमे च विशेषं बलं विद्यते। अन्येषु पुराणेषु सर्गप्रतिसर्गवर्णनं तथा तत्त्व निरुपणं यस्य कस्याप्यधिदेवस्य महत्त्वप्रतिपादनार्थमस्ति।

"आत्मानं प्रकृतिं विद्धि मां विद्धि पुरुषं शिवम्" इत्येवं वायुपुराणे प्रकृति स्त्रियं पुरुषं पुमासं च मत्वा सृष्टिवर्णनं जातमस्ति।

उद्भिज्ज-स्वेदज-अण्डज-जरायुजभेदाच्चतुर्विधसर्गवत्, चातुर्वर्ण्यसर्गस्यापि वर्णनं सर्वत्रोपलभ्यते। ऋग्वेदे १।९ ब्रह्मणः सत्त्वोद्रित्तशरीररूपाद् मुखात् ब्राह्मणाना-मुत्पत्तिरुक्ता। देवादीनां विवेचने देवानामप्येवमुत्पत्तिः प्रदर्शिता। रजः प्रधानशरीराद् मनुष्याः समुत्पन्नाः। एवं देव-ब्राह्मणौ उभावपि ब्रह्मणो मुखात्समुत्पन्नौ। उभयोरिदमनतरमस्ति, यद् देवा मूलतः सत्त्वोद्रेकसमुद्भवे समुत्पन्नाः, किन्तु ब्राह्मणाः सत्त्वरजसोरुभयोः समुद्रेके समुत्पन्नाः सन्ति। अतो देवा ब्राह्मणेभ्यः श्रेष्ठाः। ब्राह्मणाश्च सन्ति अन्येभ्यो वर्णेभ्यः श्रेष्ठाः। वर्णेषु ब्राह्मणानां श्रेष्ठता प्रतिपादनाय ते मुखतः समुत्पन्नाः प्रदर्शिताः। वायुपुराणे (२।८।३७-४२), पद्मपुराणे (१।३।१२०-११९) भविष्यति पुराणे (२।५१-५२) गरुडपुराणे (४।३४) च चातुर्वर्ण्यस्य वर्णनं संकोचविस्ताराभ्यामुपस्थापितमस्ति। ऋग्वेदे इदं वर्णनं न गुणानुसारमुपस्थापितमस्ति, किन्तु पुराणेषु इदं गुणसिद्धान्तेन समन्वितं कृतमस्ति। वेदव्याख्यायां पुराणानि प्रामाणिकानि आज्ञासिद्धानि तर्कीतिगानि च प्रोक्तानि। एतद् वर्णने अयं निष्कर्षो निःसरति यद् ऋग्वेदस्यैतत्प्रकारकवर्णने गुणानां स्थितिः अभिव्यक्ति अस्यैव तथ्यस्य प्रतिपादनं भवति।

महाभारते (१२।१८२-१८३) नारदीये च पुराणे अध्याये च आध्यात्मिक-सर्गस्य वर्णनं समानरूपेणोद्धृतमस्ति। विश्वस्य सर्गप्रतिसर्गविषयके प्रश्नोत्तरे शान्तिपर्वणि लयविषयकप्रश्नोत्तरे नारदीयपुराणे चाध्यात्मिकसर्गस्य चर्चाऽस्ति। अत्राव्यक्त-

महदहंकाराणां क्रमः स्वीकृतोऽस्ति, महाभूतानामुत्पत्तिविषये भिन्नता। आकाशः प्रथमो भूतः। अहंकाराकाशयोरभेदो मतः। पुशाल्करानुसारं भृगुवर्णने प्रथमं विकसितं तत्त्वं मनः, तत आकाशो विकसितः। परमेतद् वर्णनं प्रामाणिकं नास्तिं यतो भृगुविवेचने एवं चर्चा नास्ति। महाभारते (१२।१८२।१२२२), नारदीये च पुराणे (४२।१६-२८,४४) जलस्यादिसृष्टौ कारणमपि प्रदर्शितम्। जलं विना प्रजासर्गोसम्भव उक्तः। आकाशो हि सर्वभूतानामाधारोऽस्ति। पुशाल्करेण मनसः संकेतः कुतो लब्ध इत्यस्य निर्देशो न कृतः।

विविधता केवलं महाभूतानां सम्बन्धे एवास्ति। प्रकृतिमहदहंकाराणां विषये सर्वत्रैक्यमस्ति। अतः सांख्यस्य विकासवाद एव सर्वत्र स्वीकर्तव्यः।

सर्गप्रतिसर्गरहस्यं यथा सांख्ये तत्त्वानां विचाराय अनुलोमप्रतिलोमौ द्वौ क्रमौ स्वीकृतौ स्तः, तथैव पुराणेतिहासयोरपि सर्गप्रतिसर्गौ सहैव प्रदर्शितौ स्तः। यथा तत्त्वानां स्वरूपं बोधयितुं सञ्चरानन्तरं प्रतिसञ्चर उपस्थापितोऽस्ति, तथैव सर्गवर्णने प्रथमं ब्राह्मसर्गः, पश्चात् प्राकृतसर्गो वर्णितः। प्रतिसर्गे प्रतिलोमक्रमोऽस्ति। अर्थात् प्रथमं ब्राह्मसर्ग उपतिष्ठते, ततः प्राकृतसर्गः। इदं विकासवादसिद्धान्तानुसार-मेवास्ति। एतदेव दर्शयितुं सागरोर्मि-कूर्माङ्ग न्यायश्चोदाहृतोऽस्ति। सूर्योदयास्तमना-दिरूपेण वस्तूनि लीनानि विकसितानि च प्रदर्शितानि वायुपुराणे (४।१२०),

ब्रह्माण्डपुराणे च (४।२) एतेन सिध्यति यत् प्रकृतौ लीनानामेव पुनरावर्तनं भवति।

एतद्विरुद्धां सर्वथा नवीनां सृष्टिं स्वीकुर्वतां विचारस्य कृते पुराणेतिहासयोर्नास्ति प्रश्रयविमर्शः। कर्मणो विवेचनेऽपि दृश्यते यद् नैमित्तिकलये कर्मणः स्थूलरूपस्यैव नाशो भवति। तत्सूक्ष्मं रूपं तु तदवस्थं तिष्ठति। सृष्टिसमये पुनः स्वकर्तारमुपतिष्ठते। संसारचक्रस्य विच्छिन्नतां दर्शयितुं कर्म संसारौ अन्योन्याश्रयौ कथितौ। धाता यथा पादनं भवति। सत्कार्यवादविचारेणापि स्पष्टमस्ति यद् वस्तूनामनुच्छेदो नवीनानामनुत्पाद एव तच्चक्रद्वयम्। सर्वथा नवीनसृष्टिस्वीकारेण तथा प्राचीनां पूर्णसमुच्छेदस्वीकारेण सर्वत्र सामान्यरूपेणाभ्युपगतो विकासवादो विकलाङ्गः स्यात्। अतः प्राचीनानामेव पदार्थानां नवीनरूपेण स्वीकार एव श्रेयस्करः, आगसमर्थितश्चास्ति। एतदेव स्पष्टयितुं पुराणेतिहासयोः सर्गप्रतिसर्गविषये भूतकथनेन सह क्वाचित् क्वचिद् भविष्यवाण्यपि कृताऽस्ति।

तत्तत्पुराणेषु सः, तद् , तानि, तान् , पूर्ववत् , यथापूर्वमित्यादीनि पदान्यपि इदमेव बोधयन्ति यद् वस्तुन उत्पत्तौ निरोधे च केवलामाकारपरिवर्तनं भवति। कियत्सु स्थलेषु आसीत् , पुरा, आदिपदैर्गुणसाम्यतमोमय-एकार्णवान् संकेतयित्वा वर्तमाने काले सर्गस्य वर्णनं कृतमस्ति। एभिर्वर्णनैरतीतानागतवर्तमानां

पारस्परिकस्य सिद्धिर्भवति। अत एव सांख्ये कालस्य पृथक् स्थितिर्न स्वीकृताऽस्ति। एतेन स्पष्टमस्ति यत् कालः कार्यस्यावस्थाद्योतकोऽस्ति। एवं सर्गप्रतिसर्गयोरव्यवहित-वर्णनेन विकासवादो व्यवस्थापितः। उपर्युक्तैर्विवेचनैर्व्यक्तं भवति यद् ब्राह्मप्रति-सञ्चरानन्तरं प्राकृतप्रतिसञ्चरो भवति। पृथिव्यां वर्तमानस्य चराचरस्य लयानन्तरं पृथिव्या लयो जले भवति। एतदवधिवर्णनं ब्राह्मप्रतिसञ्चरः प्रोच्यते। अयं कल्पान्ते भवति। एतदनन्तरं गन्ध-रस-रूप-स्पर्शाः क्रमशः स्वस्वकारणेषु विलीयन्ते। अयं प्राकृतिकः प्रलयो द्विपरार्द्धिकश्चोच्यते। महाभारते बाह्मप्रतिसञ्चरः पुराणानुरूप एवास्ति।

पृथिव्यां यानि भूताति जङ्गमानि ध्रुवाणि च ।
तान्येवाग्रे प्रलीयन्ते भूमित्वमुपयान्ति च ।।
एवं सर्वाणि भूतानि ब्रह्मैव प्रतिसञ्चरः ।

अपि च---

यथा संहरते जन्तून् ससर्ज च पुनः पुनः ।
अनादिनिधनो ब्रह्मा नित्यश्चाक्षर एव च ।।
चतुर्विधं महीपाल निर्दहत्याशु तेजसा ।
जरायुजाण्डजस्वेदजोद्भिज्जं च नराधिपः ।।

इदं वर्णनं पद्म-वायु-ब्रह्म-ब्रह्माण्डपुराणेषु सविस्तरमुपलभ्यते। ब्रह्मपुराणे २३०अध्याये शतवार्षिक्या अतीवोग्राया अनावृष्ट्या वर्णनं विस्तृतरूपेणास्ति। अनया सर्वाणि पार्थिवानि सत्त्वानि भूमित्वं प्राप्नुवन्ति। समुद्रादयः शुष्का भवन्ति। सप्त दिवाकरा आपातालतलं त्रैलोक्यं भस्मसात्कुर्वन्ति। पृथ्वी कूर्मपृष्ठाकृतिर्भवति। अयमेव नैमित्तिकः प्रतिसञ्चरः प्रोच्यते। सर्वेषु पुराणेषु संकोच-विस्तराभ्यामेवंविधं वर्णनमुपलभ्यते। एतदनन्तरं प्रलयकालीनमूष्माणं शान्तयितुं वारिदानामुत्पत्तिर्वर्णिता। एते अपि प्रलयकालीना वारिदा कथ्यन्ते। स्थावरजङ्गमेषु नष्टेषु सर्वत्रान्धकारो भवति। सर्गवर्णनात् पूर्वमेतदेव तमः, तमसीव, तमः परा इत्यादिभिः इङ्गितम्। प्रलयकालीना मेघा शतवर्षपर्यन्तं निरन्तरं वर्षन्ति।

ब्रह्मपुराणे १८प्रकाराः लयवारिदा उक्ताः। तदनन्तरं प्राकृतसर्गस्य वर्णनमस्ति (२३२।१४-३०,३४)। अत्र लय-प्रलय-प्रतिसर्ग-प्रतिसञ्चरा एकार्थकाः कथिताः सन्ति। क्रमशः स्वस्वकारणेषु प्रकृतीनां प्रलयात् प्राकृतप्रलयः प्रोच्यते। अन्ते सर्वप्रलयस्थानं परमव्यक्तं त्रिगुणसाम्यावस्था प्रकृतिः पुरुषश्चेति स्वे स्वे स्वरूपे व्यवतिष्ठेते। वायुपुराणे (४।१००।१३०-१७२), ब्रह्माण्डपुराणे (१।१२८-१९७), पद्मपुराणे (१।४१।५३-१४४) एवमेव प्रतिसञ्चरस्य वर्णनमुपलभ्यते। पद्मपुराणपदावली किञ्चिद् भिन्नास्ति, परं वायु-ब्रह्माण्डयोः वर्णनमेतदनुरूपमेवास्ति। पद्मपुराणे प्राकृतप्रलयस्य निर्देशमात्रमस्ति। तदनन्तरमेव सर्गस्य विवेचनमुपतिष्ठते।

ब्रह्माण्डपुराणे(१।१२८-१९७, ४।४।१७२-१८१) आभूतसंप्लवस्य व्याख्या कृताऽस्ति।

एवं ब्राह्मसर्ग-प्राकृतसर्ग-ब्राह्मप्रतिसर्ग-प्राकृतप्रतिसर्गसम्बन्धे पुराणेतिहासयोः प्राय ऐक्यमतमस्ति। इदं देवनिरपेक्षं शुद्धमाध्यात्मिकं वर्णनमुच्यते। अत्र तत्त्वानां रूपे क्रमे एव विशेषबलं दत्तमस्ति। यदा आदितत्त्वमन्तिमतत्त्वं च एकोऽधिदेवः स्वीक्रियते, तदा तद् अधिदैविकं वर्णनं कथ्यते। अद्यावधि विद्वद्भिः पुराणानां तत्त्वदर्शनमेतद्रूपेणोपस्थापितम्। पुराणेषु शुद्धाध्यात्मिकविवेचने केषाञ्चिदपि विदुषां ध्यानं नाकृष्टमस्ति। आधुनिका विद्वांसः पुराणानां तत्त्वविवेचने साम्प्रदायिकतया समाक्रान्तमधिदैविकं मन्यन्ते। पूर्वोक्तविवेचनेन व्यक्तमस्ति यदत्र शुद्धमाध्यात्मिकं विवेचनं प्रधानमस्ति तथा साम्प्रदायिकं विवेचनं तत्रैवोद्धृतमस्ति। पुराणेष्वपि अधिदेवानामाधारेण एषां सात्त्विक-राजस-तामस-भेदेषु पर्याप्तः संकेत उपलभ्यते। एतेन पुराणसाहित्यं त्रिमूर्ति सिद्धान्तप्राधान्यमवलम्बत इति सिध्यति। सिद्धान्तोऽयं सांख्यस्य त्रिगुणसिद्धान्तेन संश्लिष्टोऽस्ति। अतोऽत्र सांख्यसिद्धन्तः स्पष्ट एवास्ति। ब्रह्म-विष्णु-शिवादिषु विभिन्नेषु पुराणेषु सम्प्रदायानुसारं प्राधान्यमुपगताः सन्ति। एतेऽपि त्रिगुणसिद्धान्तानुसारं त्रिषु रूपेषु उपस्थापिताः सन्ति।

प्रलयस्य वर्णनं प्रायः प्रत्येकपुराणेषु जातमस्ति। ब्रह्मपुराणे (२३१।१-२३), विष्णुपुराणे(६।३।१-७, ६।१०।४), वायुपुराणे(१००।१३२-१३५), श्रीमद्भागवते (१२।४), मार्कण्डेयपुराणे (४६।१-४४), कूर्मपुराणे (२।४५-४६), गरुडपुराणे(१-२२५।४-२१), ब्रह्माण्डपुराणे च (३।१२-१८) प्रलयस्य वर्णनं विद्यते।

तत्तत्पुराणेषु विशिष्टशब्दाः प्रयुक्ताः सन्ति। यथा-अन्तरप्रलयो ब्रह्मपुराणे २३२-११ अन्तराला, उपसंहृतिः विष्णुपुराणे(६।१।४०) आभूतसंप्लवः उदाहृतः। श्रीमद्भागवते(३।८।१०) निरोधः, संस्था (१२।७।१७) उपसंहृतिः एकार्णवावस्था, तत्त्वप्रति संयमः, वायुपुराणे (१०२।४०) प्रतिसंक्रमः प्रतिसंचरः प्रतिसंसर्गः, संप्लवः (१२।४।६४) विष्णुपुराणे (६।३।१) श्रीमद्भागवते च प्रलयश्चतुर्विधः प्रोक्तोऽस्ति (१) नैमित्तिकप्रलयः, (२) प्राकृतप्रलयः, (३) आत्यान्तिकप्रलयः, (४) नित्यप्रलयश्च।

(१) यस्मिन् प्रलये शेषशायी भगवान् नारायणः समस्तं विश्वं स्वोदरे संगृह्य शेते, स नैमित्तिकप्रलयः। विष्णोः शयनं निमित्तीकृत्य जायमानत्वादयं नैमित्तिकः प्रलयः प्रोच्यते।

(२) यदा ब्रह्मण आयुः समाप्तिमेति तदा सप्तप्रकृतयः ( पञ्चतन्मात्रा अहंकारो महतत्त्वञ्च) स्वकारणभूतायामव्यक्तप्रकृतौ लीयन्ते। सप्तप्रकृतीनां प्रकृतो लीनत्वादयं प्राकृतप्रलयः प्रोच्यते। अस्य प्रलयस्योपस्थितौ भीषणसंहारस्य दृश्यं समुपतिष्ठते। पञ्चमहाभूतमिश्रणज्जायमानं समग्रं ब्रह्माण्डं स्वीयं स्थूलं रूपं परिहाय स्वकारणे विलीनं भवति। प्रलयसमये समुपस्थिते शतवर्षाणि वृष्टेरभावादन्नं नोत्पद्यते, परिणामतः क्षुत्क्षामकण्ठाः प्रजा मेम्रियान्ते, उपरि देदीप्यमानस्य प्रचण्डमार्तण्डस्य तीव्रकिरणैः पातालस्थसंकर्षणमुखान्निसरन्ती उल्वणा अग्नेः ज्वाला प्रचण्डवायुवेगेन शतवर्षाणि वहति। तदाऽऽकाशो धूमेन धूलिना च प्रपूर्यते। विचित्रा मेघा भयंकरतया गर्जनपूर्वकं शतवर्षाणि वर्षन्ति, अखिलं भुवनं महार्णवसमं संजायते। तथा पृथिवीगुणं गन्धं जलं ग्रसति, येन भूमिजले प्रलीयते, जलं तेजसि, तेजो वायो, वायुश्चाकाशे लीयते। आकाशोऽहंकारेऽहङ्कारः महतत्त्वे, महत्तत्त्वञ्च प्रकृतौ लीयते। तस्मिन् समये केवला प्रकृतिरेव शिष्यते। सा च जगतो मूलकारणमस्ति। सा अव्यक्ताः अनादिरनन्ता नित्या अविनाशिनी चास्ति। तथा प्रकृतिपुरुषयोरुभयोः शक्तयः कालप्रभावेण क्षीणाः सत्यः स्वमूलकारणे ब्रह्मणि विलीयेते। एतदेव प्राकृतः प्रलयः उच्यते।

तथा हि श्रीमद्भागवते---

**द्विपरार्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः ।**

**तदा प्रकृतयः सप्त कल्पान्ते प्रलयाय व ।।**

**एष प्राकृतिको राजन् प्रलयो यत्र लीयते ।**

**अण्डकोशस्तु संघातो विघात उपसाधिते ।।**

(३) पूर्वीर्वणतयोः प्रलययोः कालो नियतोऽस्ति, यथा नैमित्तिकप्रलयः कल्पस्यान्ते भवति, तथैव प्राकृतप्रलयो ब्रह्मण आयुषः क्षये भवति। परन्तु आत्यन्तिकप्रलये न कालस्य सीमा निवद्धोऽस्ति, अपि तु यदैव साधनसामग्री समुपतिष्ठते, तदैव सम्पद्यते सः।

(४) पुराणानुसारं सृष्टिप्रलयौ नित्यं भवतः। विश्वस्य सर्वे पदार्थाः नदीप्रवाहवद् दीपशिखावच्च प्रतिक्षणं परिवर्तन्ते। यथाऽऽकाशे सर्वदा वर्तमाना अपि तारा न दृष्टिगोचरीभवति, तथैव सर्वदा जायमानं परिर्वतनं न दृष्टिगोचरीभवति। भगवत्स्वरूपभूता कालशक्तिः अनादिरनन्ता चास्ति। तया प्रतिक्षणं परिवर्तनं भवति, परन्तु तस्य सूक्ष्मत्वाद् दुर्बोधत्वाच्च न तन्मानं बुद्धिग्राहयं भवति। तथा च प्रतिक्षणं जायमानो विनाशो नित्यप्रलयनाम्ना व्यवह्रियते।

विष्णुपुराणे नित्यनैमित्तिक प्राकृतात्यन्तिकभेदाच्चतुर्विधः प्रलय उक्तोऽस्ति।

**नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिको द्विज ।**

**नित्यश्च सर्वभूतानां प्रलयोऽयं चतुर्विधः ।।**

**ब्राह्मो नैमित्तिकस्तत्र शेते यं जगतीपतिः ।**

**प्रयाति प्राकृते चैव ब्रह्माण्डं प्रकृतौ लयम् ।।**

**ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि ।**

**नित्यः सदेव भूतानां यो विनाशो दिवानिशम् ।।**

अर्थात् सर्वेषां भूतानां चतुर्धा प्रलयो भवति। तत्र नैमित्तिकप्रलय अव ब्राह्मप्रलयः। यत्र जगतपतिः ब्रह्मा कल्पान्ते शयनं करोति स प्राकृतप्रलयः। प्राकृतप्रलये ब्रह्माण्डं प्राकृतौ लीयते। ज्ञानद्वारा परमात्मनिलय आत्यन्तिकप्रलयः , अहोरात्रं भूतानां जायमानः क्षयो नित्यप्रलयः प्रोच्यते

## प्रकृतिपुरुषयोः सम्बन्धः

पुराणेतिहासयोः सांख्यीयपदार्थानां चेतनाचेतनभेदेन द्विधा विभागः कृतोऽस्ति। प्रकृतिपुरुषौ तयोर्विभागयोः प्रतिनिध्यं कुरुतः। सांख्यतत्त्वार्थे ध्याने दीयमाने द्विविधं तत्त्वमुपलभ्यते--- एकं तत्त्वमचेतनं सगुणं संक्रियं सविकारञ्च, द्वितीयं तद्विपरीतं चेतनं निर्गुणं निर्विकारं निष्क्रियञ्च। तत्र प्रथमोऽचेतनवर्गः प्राकृतवर्गो वाभिमतः।

अस्य वर्गस्य मूलं प्रकृतिरस्ति। द्वितीयः पुरुषोऽस्ति, यः आदिः, अव्ययः, अनन्तः, जन्मादिव्यतिरिक्तश्च कथितः। अत एव तन्मूलस्य प्रश्न एव नोदेति। एवं प्रकृतिः पुरुषश्चेति द्वे एव तत्त्वे सांख्ये मुख्ये स्तः। महाभारते प्रकृतिः प्रलयपदेन व्यपदिश्यते-- प्रलयं प्रकृतिं प्राप्य युगादौ सृजते पुनः। (१२।११०।१६)। प्रलीयन्तेऽस्मिन् महदादिकार्यमिति प्रलयः, तथा प्रकरोति उत्पत्तिलयस्थानमिति प्रकृतिः। नीलकण्ठेनायमेवार्थो विहितोऽस्ति। महाभारते----

**एवमेवाभिसम्बद्धौ नित्यं प्रकृतिपुरुषौ ।**

**पश्यामि भगवंस्तस्मान् मोक्षधर्मौ न विद्यते ।।**

अत्र जनक आशङ्कते यदि प्रकृतिपुरुषो अन्योऽन्याश्रयौ नित्यौ स्तः, तर्हि प्रकृतिः पुरुषं कथङ्कारं मोचयति?

श्रीमद्भागवते उद्धवेन (११।२२।२६-२७) देवहूत्या च (३।२७।१७) एवंविधः प्रश्न उपस्थापितः। उद्धवस्य प्रश्नोत्तरे भगवान् श्रीकृष्णः पूर्वर्षिगण-विनिश्चितसांख्यस्य सम्यग् निर्देशेन बोधयितुमुपक्रमते। यद् ज्ञात्वा मनुष्यः सद्य एव वैकल्पिकं भ्रमं परित्यजति। उपर्युक्तरीत्या पदार्थविभाजनपूर्वकमुक्तम्। तत्र कपिलमुनिः पुरुषं जगत्कर्तारं प्रकृतिञ्च जगत्कर्त्रीं मन्यते। सांख्यं प्रकृतिं प्रयोजनवतीं स्वीकरोति। पुरुषस्य भोगोऽपवर्गो वास्याः प्रयोजनम्। एतदेव प्रयोजनं साधयितुं

क्रमशः महदादिक्रमेण भूतपर्यन्तमस्या विकाशो भवति, नहि क्रमशः। पूर्वं सूक्ष्मः परिणामो भवति। अथ क्रमशोऽयं विकासः स्थूलतामुपगच्छति। पुरुषनिर्देशेन गमनादस्या विकाशक्रमेऽव्यवस्थायै न कश्चिदस्ति अवसरः।

एवं प्रकृतिपुरुषावुभौ परस्परावलम्बितौ स्तः। पुरुषोऽधिष्ठाता प्रकृतिश्च अधिष्ठानमुक्ता। पुरुषस्याधिष्ठातृत्वेऽपि स उदासीनः असंगश्चास्ति। अत एव स उपेक्षक उच्यते। उपसमीपे स्थित्वा ईक्षते इत्युपेक्षकः। पुरुषाघिष्ठातृत्वे एव सर्वे प्राकृतिका विकारा भवन्ति। वस्तुतश्चेतनस्य स्वेच्छाया समर्पकत्वमेवाधिष्ठातृत्वमस्ति। पुरुषस्य प्रयोजकत्वमत्राधिष्ठातृत्वपेदन विवक्षितम्। स अधिष्ठाता सन्नपि उदासीनोऽसंगश्चास्ति। अतः तस्योदासीनत्वं सर्वदा अक्षुण्णमस्ति।

महाभारते (१२।२११।१-४, १२, १३) प्रकृतिः प्रयोजनवती उक्ता। सा जगद् विकासं कुर्वन्ती अक्षयाऽस्ति। तस्या आनन्त्यस्य कदाप्यपचयो न भवति। तत्रानेकसंसारस्य विकासयोग्यता विद्यते। इयं पुरुषाधिष्ठितैव समस्तं चराचरं जगद् आविर्भावयति। श्रीनीलकण्ठप्रभृतिभिः पुरषाधिष्ठितत्वात् प्रकृतिः परतन्त्रा मन्यते। एस०रायोऽपि एवं निष्कर्षः निःसारयति, किन्तु नेयं वास्तविकताऽस्ति यत् प्रकृतिः पुरुषप्रयोजनसाधनात् तदधिष्ठानाच्च परतन्त्रा नास्ति। सर्वपदार्थलयस्था-नत्वात् प्रकृतिः अलिङ्गमुच्यते। अलिङ्गत्वादेव प्रकृतिः स्वतन्त्रास्ति। प्रकृतिः

तस्यामेवावस्थायां पारतन्त्र्यमनुभवितुमर्हति यदा सा अन्यस्मात् कारणाद् विकसिता सती प्रलये तत्रैव लीयते। सांख्यनये व्यक्ता एव पदार्था सावयवाः परतन्त्राश्चोच्यन्ते। लयशीलं तत्त्वं लिङ्गमुच्यते। अत एव प्रकृतिः उत्पत्तिस्थितिलयस्थानमुक्ता।

देवीभागवते ब्रह्मवैवर्ते महाभारते च प्रकृतिपुरुषयोः एकत्वपृथक्त्वसम्बन्धे प्रचलितानां वादानां संकेतोऽस्ति। एकदेवातिरेकवादिनः इमे द्वे एकस्मिन् देवे पर्यवसितं कुर्वन्ति। महाभारते (१४।४८।९) प्रकृतिः पुरुषश्च पृथक्-पृथक् तत्त्वमस्ति। प्राणायामसंयमी चतुर्विंशात्परं पञ्चविंशं परमात्मानं प्राप्नोति (१४।४८।४)। प्रकृतेरुत्कृष्टसत्स्वरूपः पुरुषोऽस्ति, सोऽमृतत्वाय कल्पते (१४।४८।५)। आत्मविदो विद्वांसः आत्मनः परं न किञ्चित् प्रशंसन्ति। अनुमानप्रमाणद्वारा आत्मनि स्थितमन्र्यामिनं परमात्मानं जानन्ति (१४।४८।६)। ब्रह्मवैवर्ते (१।२९।४, ३२-२६) द्वयोर्नित्यता ब्रह्मातिरिक्ता प्रकृतिः प्रोक्ता। श्रीमद्भागवते (११।२४।३-४) प्रलयकाले ज्ञानं द्वैधशून्यमेकमेवासीत् , यद् ब्रह्म उच्यते। तदेव प्रकृतिपुरुषरूपेण द्विधाऽभवत्। तयोरेकतरा प्रकृतिः कार्यकारणोभयात्मकं रूपं धृतवती, द्वितीयस्तु पुरुषो ज्ञानस्वरूपोऽस्ति। एवमुभयोः पार्थक्यं स्पष्टमुक्तम्।

वैदिकवाङ्मये सांख्यस्य द्वित्ववादसंकेतः अनेकेषु स्थलेषु उपलभ्यते। ऋग्वेदे'द्वा सुपर्णा सयुजा सखायौ समाने वृक्ष परिषस्वजाते' (१।१६४।२०) इत्यत्र प्रकृतिपुरुषयोः पार्थक्यं द्रष्टुं शक्यते। विद्वद्भिरेवं बहुविधः संकेतः कृतः। वायौ(४।१०२।५०।५४), ब्रह्माण्डे(४।३।२१-२४) एवंविधो भावो विशदरूपेण व्यक्तीकृतोऽस्ति।

पुरषो द्रष्टा साक्षी अकर्ता उदासीनः पुण्यपापाभ्यामलिप्तोऽस्ति। वैकल्पिक-भ्रमवशात् पुरुषः प्रकृतिगतं कर्मादि आत्मीयं मन्यते। कीथ--- विन्टरनित्सप्रभृतयः पाश्चात्त्या विद्वांसोऽपि एतत् स्वीकुर्वन्ति यद् द्वा सुपर्णावित्यत्र सांख्यस्य द्वित्ववादः स्पष्टोऽस्ति। विन्टरनित्सः (ऋ० १०।८१-८२) काष्टजतु अपांरूपे पुरुषातिरिक्तं प्रकृतितत्त्वं स्वीकरोति। महाभारते (१४।४६।५४-५५) प्रकृतिपुरुषौ अन्योऽन्याश्रयौ व्यामिश्रीभावात्मकौ युक्तौ स्तः प्रकृतेः पुरुषस्य च ज्ञाता सर्वबन्धनैर्मुच्यते। यः तत्त्ववेत्ता रहसि परमात्मानं ध्यायति स सर्वासक्तिरहितः परमात्मानं प्राप्नोति। प्रकृतिपुरुषयोः स्वरूपं ज्ञात्वा पुरुषः सर्वेभ्यः पापेभ्यः विमुच्यते। प्रकृतिपुरुषयोः अधिष्ठातृत्वस्य अधिष्ठात्रीत्वस्य च विचारे क्रियमाणे स्पष्टं प्रतीयते यत् प्रकृतेः विकारैरेव पुरुषोऽनुमीयते। गीतायां प्रकृतिपुरुषयोः स्वरूपप्रकाशौ सम्यगुक्तौ स्तः-

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैतान् विद्धि प्रकृतिसंभवान् ।।
कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ।।
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ।।
उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ।।
य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ।।
प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानमकर्तारं स पश्यति ।।

एवं भोगेन भोक्तुः कार्येण करणस्य चानुमानाभ्युपगमः सर्वत्र स्वीकृतोऽस्ति। अत्र प्रकृतिपुरुषयोः पार्थक्यमुपर्युक्तैः प्रमाणैः स्पष्टं प्रतीयते।

श्रीमद्भागवतस्य ११स्कन्धे २२अध्याये स्वरूपतः प्रकृतिपुरुषौ द्वावपि भिन्नौ स्तः, तथापि इमौ परस्परं सापेक्षत्वाद् भिन्नौ नानुभूयेते, प्रकृतौ पुरुषः पुरुषे च प्रकृतिः अभिन्नतया प्रतीयेते, कथमेतयोः भिन्नता स्पष्टीभवेत्? ममान्तःकरणे भिन्नत्वाभिन्नत्वयोर्महानस्ति सन्देहः। कृपया भवान् स्वसर्वज्ञत्वाद् युक्तियुक्तयावाण्या

मे सन्देहं निवारयेत्येवमुद्धवेन पृष्टो भगवान् श्रीकृष्णः प्रावोचत्-विकारित्वा- विकारित्व-एकत्वनानात्व-सापेक्षत्वनिरपेक्षत्व-प्रकाशान्धकाररूपेण प्रकृतिपुरुष-योरुभयोरत्यन्तं भेदस्तु अस्त्येव, यतो हि त्रिगुणमयी मे माया स्वीयान् सत्त्वादीन् गुणानाश्रित्य भेदबुद्धिमेव जनयति।

एकस्मिन्नेव शरीरे प्रतीन्द्रियम् अधिभूताध्यात्माधिदैवरूपेण त्रयो भेदाः कल्पिताः सन्ति। तथा चक्षुषि गोलकम् अधिभूतम् , इन्द्रियमध्यात्मम् , सर्गोऽधिदेवः। इमे त्रयोऽपि भेदाः परस्परं सापेक्षाः सन्ति। एषु कस्याप्येकस्याभावे रूपज्ञानं भवितुं नार्हति, परन्तु आकाशे स्थितं सूर्यमण्डलमेभ्यः त्रिभ्यो भिन्नमस्ति। एवं समेषामेषां भेदानां करणं स्वप्रकाशस्वरूप आत्मा एभ्यः त्रिभ्यो भेदेभ्यः पृथगेवास्ति। समेषामाधारभूतस्यात्मन उपलब्धिस्तु अहङ्कारनिवृत्या भवति। अहङ्कारनिवृत्तिश्च तदा भवति यदा त्रिविधोऽयं विकल्पो लीयते। विकल्पो हि आत्मतो ज्ञानवशेन भासते। आत्मज्ञाने जाते विकल्पः स्वयमेव निवृत्तो भवति।

तत्रैव ३स्कन्धे २७अध्याये देवहूतिः भगवन्तं कपिलं पप्रच्छ यद् वत्स! मुक्तये प्रकृतिपुरुषयोः परस्परमपेक्षितस्त्यागो न सम्भवति, यतः पुरुषं विना प्रकृतिः प्रकृतिं विना पुरुषस्य च सत्ता न स्थातुं शक्नोति?

यथा पृथिवीतो गन्धः, जलाद् रसः, अग्नेर्दाहकता च पृथग् न स्थातुमर्हति, तथैव प्रकृतेः पुरुषः पुरुषाच्च प्रकृतिः पृथक् स्थातुं नार्हतः।

इत्येवंप्रश्ने उत्तरयति भगवान् कपिलः-- मातः? निष्कामकर्माचरणेन मानवस्य मनो निर्मलं जायते। निरन्तरं भगवत्कथाश्रवणज्जायमानया तीव्रभक्तया भगवति एवं मनो रमते येन सांसारिकं किमपि वस्तु नेच्छति तत्। सर्वत्रैवं वैराग्यं वर्द्धते, न पुनः प्रकृतिः तमाक्रष्टुं शक्नोति----

एवं विदिततत्त्वस्य प्रकृतिर्मयि मानसम् ।
युञ्जतो नापकुरुन आत्मारामस्य कर्हिचित् ।।

## पुराणेषु योगभेद चर्चा

योगभेदनिरूपणप्रसङ्गे कैलासशिखरे गिरिराजपुत्र्या भगवत्या पार्वत्या महादेवी भगवान् नीललोहितः सादरं पृष्टो यत्---

**योगः कतिविधः प्रोक्तः तत्कथं चैव कीदृशम् ।**
**ज्ञानं च मोक्षदं दिव्यं मुच्यते येन जन्तवः ।।**

तदुत्तरे हृष्टपुष्टतनुरुहो महेशः प्रोवाच-- देवि? योगः पञ्चविधोऽस्ति, तत्र प्रथमः मन्त्रयोगः, द्वितीयः स्पर्शयोगः तृतीयो भावयोगः, चतुर्थोऽभावयोगः, पञ्चमश्चास्ति

सर्वश्रेष्ठो महायोगः। तथाहि।

प्रथमो मन्त्रयोगश्च स्पर्शयोगो द्वितीयकः ।
भावयोगस्तृतीयः स्यादभावश्च चतुर्थकः ।।
सर्वोतमो महायोगः पञ्चमः परिकीर्तितः ।।

हिमालयेन अविरागिणो मध्यमस्याधिकारिणो भक्तिज्ञानप्रसङ्गे पृष्टा भगवती पार्वती मोक्षप्राप्तौ कर्मयोगो ज्ञानयोगो भक्तियोगश्चेति त्रीन् मार्गान् निर्दिदेश। तत्र भक्तियोगस्य सुलभत्वञ्चोपादिदेश----

मार्गास्त्रयो मे विख्याता मोक्षप्राप्तौ नगाधिप! ।
कर्मयोगो ज्ञानयोगो भक्तियोगश्च सत्तम ।।
त्रयाणामप्ययं योग्यः कर्तुं शक्योऽस्ति सर्वदा ।
सुलभत्वान्मानसत्वात् कायचित्ताद्यपीडनात् ।।

क्रियायोगो ध्यानयोगश्चेति द्वावेव योगौ कथितौ तयोः ध्यानयोगात् क्रियायोगः सर्वकामदः प्रशस्तश्चोक्तः----

क्रियायोगो ध्यानयोग उभौ यौगौ प्रकीर्तितौ ।
तयोराद्यः क्रियायोगः कुर्वतां सर्वकर्मदः ।।

अपि च क्रियायोगध्यानयोगयोरङ्गानि गङ्गाविष्णुपूजादानानि ब्राह्मणेषु एकादशीव्रते धात्रीतुलस्योश्च भक्तिः पूजनञ्च क्रियायोगस्याङ्गानि सन्ति। क्रियायोगमन्तरा ध्यानयोगो नसिध्यति। अतः क्रियायोगतो विष्णोः परमं पदं प्राप्यते।

**क्रियायोगादृते विप्र! ध्यानयोगो न सिध्यति ।**
**कियायोगरते याति तद्विष्णौः परमंपदम् ।।**

पञ्चदशाध्याये पाशुपतयोगस्य चर्चाऽस्ति। द्वादशे अध्याये च माहेश्वरयोगस्य सर्वज्ञता, तृप्तिः, अनादिबोधः, स्वतन्त्रता, नित्यमलुप्तशक्तिः, अनन्तशक्तिश्चेति षट् अङ्गानि योगविधिज्ञैः प्रोक्तानि सन्ति----

**सर्वज्ञता तृप्तिरनादिवोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।**
**अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरम् ।।**

मन्त्रयोगः, स्पर्शयोगः, भावयोग, अभावयोगः महायोगश्चेति पञ्चधा योगः कथितः। तत्र मन्त्रजपस्याभ्यासवशेन मन्त्रवाच्यार्थगोचरीभूता विक्षेपरहिता या मानसीवृत्तिः सा मन्त्रयोगः। प्राणायामयुक्ता सैव मनोवृत्तिः स्पर्शयोगः प्रोच्यते। स एवं स्पर्शयोगरहितो भावयोगो निगद्यते। येन समस्तस्य विश्वस्य रूपमात्रावयवा विलीयन्ते सोऽभावयोगः प्रकीर्तितः, यतो हि तत्र विद्यमानस्यापि वस्तुनः अभासो न भवतिं यत्र केवलं निरूपाधिकस्य शिवस्वभास्यैव चिन्तनं क्रिया सैव शिवमयी

मनोवृत्ति र्महायोग उच्यते----

**विरुद्धवृत्त्यरस्य शिवे चित्तस्य निश्चला ।**

**या वृत्तिः सा समासेन योगः स खलु पञ्चधा ।।**

**मन्त्रयोगः स्पर्शयोगो भावयोगस्तथा परः ।**

**अभावयोगः सर्वेभ्यो महायोगः परो मतः ।।**

किञ्चोमाखण्डे ५१अध्याये ज्ञानयोगः क्रियायोगो भक्तियोगश्चेति त्रयो योगा भगवत्या देव्या उपासनार्थं भोगमोक्षप्रदायका उपदिष्टाः सन्ति----

**ज्ञानयोगः क्रियायोगो भक्तियोगस्तथैव च ।**

**त्रयो मार्गाः समाख्याताः श्रीमातुर्मुक्तिभुक्तिदाः ।।**

**कर्मणा जायते भक्तिर्भक्तया ज्ञानं प्रजायते ।**

**ज्ञानात् प्रजायते मुक्तिरिति शास्त्रेषु निश्चयः ।।**

किञ्च यस्मिन् देशे नित्यं शियोगरतो मुनिः निवसति, स देशः कियान् पवित्रतम इति वक्तुं न शक्यते। अतः सर्वं परित्यज्य सकलदुःखनिवृत्तये शिवयोग-मभ्यसेत्। अपि च प्रसादयोगः परमयोगो भक्तियोग इति त्रिविधो योगोऽपि प्रोक्तः।

उद्धवेन पृष्टो भगवान् श्रीकृष्णः मानवानां कल्याणकामनया अधिकारिभेदात् त्रिविधमुपायं प्रोक्तवान्। ज्ञानयोगो भक्तियोगः कर्मयोगश्च। एभ्योऽन्योभूतले कश्चनोपायः

कुत्रचिन्नास्ति----

**योगास्त्रयो मया प्रोक्ताः नृणां श्रेयो विधित्सया ।**

**ज्ञानं कर्म च भक्तिश्च नान्योपायोऽस्ति भूतले ।।**

एषु ये दुःखदं मत्वा कर्मफलाद् विरक्ता कर्माणि त्यजन्ति, ते सन्ति ज्ञानयोगस्याधिकारिणः तेषां सिद्धिप्रदो ज्ञानयोगः प्रशस्यः। येषां चेतांसि कर्मभ्यस्तत् फलेभ्यश्च विरक्तानि न भवन्ति ते सकामाः सन्ति कर्मयोगस्याधिकारिणः। अर्थात् फलेच्छूनां कर्मयोगो ज्यायान् , किन्तु पूर्वजन्मशुभकर्मभिः सौभाग्याद् येषां भगवल्लीला-कथादौ श्रद्धा समुत्पद्यते, ये न सन्ति विरक्ता नात्यन्तमासक्तास्तेभ्यो भक्तियोग एव श्रेयस्करः! एवं च विरक्तानां ज्ञानयोगेऽधिकारः, आसक्तानां कर्मयोगे अधिकारः, उभयरहितानां च भक्तियोगेऽधिकार निर्णीतः----

**निर्विण्णानां ज्ञानयोगो नयासिनामिह कर्मसु ।**

**तेष्वनिर्विवणचित्तानां कर्मयोगस्तु कामिनाम् ।।**

**यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ।**

**न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ।।**

यावत्कालं विरक्तो न भवेद् भगवत्कथाश्रवणादौ श्रद्धावान् जायेत तावत्कालं कर्माणि कुर्वीत। वैराग्यस्य कारणमस्ति निष्कामकर्म। तेनान्तः कराणशुद्धिर्भवति, अत्यासक्तेः वीजमस्ति अनाद्यविद्या, अत्यासक्तिनिवृतिहेतुर्भगवत्कृपाजन्यः

सत्संगोऽस्ति।

मत्स्यरूपी जनार्दनः सूर्यसूनवे मनवे कर्मयोगं प्रोक्तवान् इति प्रसंगमाकर्ण्य ऋषिभिः प्रार्थितः सूतः विष्णुभाषितं कर्मयोगं सविस्तरं वक्तुं प्रववृते। ज्ञानयोगापेक्षया कर्मयोगः सहस्रगुणितोऽधिकः प्रशस्यते। यतोऽस्मादेव कर्मयोगाद् ज्ञानमुत्पद्यते। अतएव तत्परमं पदमस्ति----

**ज्ञानयोगसहस्राद्धि कर्मयोगः प्रशस्यते ।**
**कर्मयोगोद्भवं ज्ञानं तस्मात्तत्परमं पदम् ।।**

कर्मज्ञानदेव ब्रह्मप्राप्तिर्भवति। कर्मयोगं विना ज्ञानोत्पत्तिर्भवितुं नार्हति। तस्मात्कर्माणि युक्तात्मा शाश्वतं त्वं प्राप्नोति।

कर्मयोगे प्राधान्येन अष्टौ आत्मगुणाः संस्थिता सन्ति-सर्वभूतेषु दया, क्षमा, आतुररक्षा, लोकेऽनसूया, ब्राह्याभ्यन्तरं शौचं, अल्पश्रमसाध्येषु माङ्गल्याचारसेवनं परिश्रमद्वारा उपार्जितैः द्रव्यैः आर्तानां साहाय्ये कार्पण्याभावः परद्रव्येषु परस्त्रीषु चास्पृहा। अयमेव क्रियायोगः ज्ञानयोगस्य परमः साधकोऽस्ति। कर्मयोगं विना ज्ञानयोगस्य प्राप्तिर्न दृश्यते। अतः श्रुतिस्मृत्युदितं धर्मं प्रयत्नत आतिष्ठेत्। देवानां पितॄणां मनुष्याणां च यज्ञैः, ऋषीणां प्रेतानाञ्च तर्पणैः, विधिपूर्वकं स्वाध्यायैः

होमैश्च देवान् ऋषीन् श्राद्धैः पितॄन् अन्नदानैः वलिकर्मभिः सामान्यं जीवनिवहं च समर्चयेत्। गार्हस्थ्ये कण्डनी-पेषणी-चुल्ली-उदकुम्भी-प्रमार्जनीभेदेन पञ्चविधा स्वर्गप्रतिरोधिका हिंसा प्रतिदिनं जायन्ते, तासां पञ्चानां हिंसानां दोषदूरीकरणाय शास्त्रेषु स्वाध्याय-होम-अतिथिपूजन-पितृतर्पण-बलिकर्माख्यानां पञ्चानां महायज्ञानां विधानं कृतमस्ति।

त्रिंशत्संस्कारसम्पन्नोऽपि आत्मगुणरहितः पुमान् मोक्षं लब्धुमसमर्थः। अतोऽष्टविधात्मगुणोपेतो वेदविहितं कर्म अनुतिष्ठेत्। सत्परिश्रमद्वारा समुपार्जितैः द्रव्यैः गवांब्राह्मणानां च सर्वदा कल्याणं कार्यम्। गोभूमिसुवर्णवस्त्रसुगन्धित-द्रव्यमाल्योदकैः ब्रह्माणं विष्णुं सूर्यं शिवं च व्रतोपवासद्वारा श्रद्धया च समर्चयेत्। अतीन्द्रियः, शान्तः, सूक्ष्मः, अव्यक्तः, सनातनः, जगन्मूर्तिः, वासुदेवोऽस्ति। तस्यैवामी ब्रह्मविष्णुमहेश्वराः सूर्यः, वसवः, गणाधिपाः, लोकपालाः, मातरः, पितरश्च विभूतयः सन्ति।

ब्रह्मादयश्चत्वारो मूलरूपेण अव्यक्ता अधिपतयः सन्ति। एते ब्रह्मादयश्चत्वरो मूलरूपेणाव्यक्ता अधिपतयः सदा पूज्याः। अभेदात् पूजितेषु एषु चराचरं जगत्पूजितं स्यात्। सूर्यो वेदमूर्तिः ब्रह्मादीनां त्रयाणां परमं धाम चास्ति, यतोऽत्रैवेतेषां त्रयाणा-मवस्थितिरस्ति। अत एष पूषा प्रयत्नतः पूजनीयः। तस्मात् जपहोमव्रतो पवासदानादिभिः

इमे संपूजनीयाः। एवं क्रियायोगपरायणस्य वेदान्तशास्त्रस्मृतिप्रेमिणो विकर्मभीतस्य साधकस्य इह परत्र च किञ्चिदसाध्यं दुष्प्राप्यं च न भवति।

अपिच--- २५७अध्याये ननुज्ञानयोगसहस्रात् कर्मयोगो विशिष्टश्चेद् गृहस्थाश्रमादिषु कर्मयोगस्य सिद्धिः कथं सम्भवेत्? इतिशङ्कयामुक्तं यद् गृहस्थाश्रमिणां देवतार्चानुकीर्तनमेव भुक्तिमुक्तिप्रदः कर्मयोगोऽस्ति। यस्य सत्ता पृथ्वीतलमपहाय अन्येष्वपि केषु लोकेषु नास्ति। अतो देवमूर्तीनां प्रतिष्ठापूजानामसंकीर्तनं यज्ञोत्सव एव गृहस्थानां कृते कर्मयोगोऽस्ति। श्रद्धालवो गृहस्था अनायासेनैतद्विधाय भवबन्धनामुक्ता भवितुमर्हन्ति----

**क्रियायोगं प्रवक्ष्यामि देवतार्चानुकीर्तनम् ।**
**भुक्तिमुक्तिप्रदं यस्मान्नाना लोकेषु गीयते ।।**

एवं मत्स्यपुराणे हि क्रियायोगविधिवर्णनप्रसंगे आयुधसंस्थितिमानोन्मान-प्रतिमानिर्माणादिविचारः विस्तरेण वर्णितोऽस्ति----

देवर्षिणा नारदेन पृष्टो भगवान् नारायण आध्यात्मिकयोगं वर्णितवान्। अयं नानाप्रकारको महायोगो योगिनामपि न ज्ञातः, किन्तु हरिरेव सर्वं जानाति। किञ्चित् त्रिपुरारिः, किञ्चिद् विरञ्चि, किञ्चित् सनत्कुमारः, किञ्चित् कपिलः, किञ्चिद्

दुर्वासाश्च जानाति। अतोऽध्यात्मयोगः सर्वयोगेभ्यो विशिष्टो रहस्यपूर्णश्चास्ति---

**आध्यात्मिको महायोगो न ज्ञातो योगिनामपि ।**

**स च नानाप्रकारश्च सर्वं वेत्ति हरिः स्वयम् ।।**

प्रत्ययान्तरनियोगतो हीश्वरे एकचित्तता वैयोगः प्रोक्तः, अन्यानि च तत्साधानि सन्ति----

**मय्येकचित्ततायोगः प्रत्थायान्तरनियोगतः ।**
**तत्साधनानि चान्यानि युष्माकं कथितानि वै ।।**

तत्र योगो द्विविधः प्रोक्तः। आद्योऽभावयोगः द्वितीयश्च सर्वयोगोत्तमो महायोगः यत्र सर्वं निराभासं शून्यं ब्रह्मणः स्वरूपं चिन्त्यते सोऽभावयोगः, यत्र च नित्यानन्दं निरञ्जनं परमात्मानं परं पश्यन्ति योगिनः स महायोग उच्यते। ये च योगिनामन्ये योगाः ततद्ग्रन्थेषु श्रयून्ते, ते सर्वे ब्रह्मयोगस्यास्य षोडशीं कलां नार्हन्ति। यत्र साक्षादीश्वरं प्रपश्यन्ति योगिनः। स सर्वेषां योगिनां परमो योगोऽभिमतः----

**योगस्तु द्विविधो ज्ञेयो ह्यभावः प्रथमो मतः ।**

**अपरस्तु महायोगः सर्वयोगोत्तमोत्तमः ।।**

**ये चान्ये योगिनां योगाः श्रूयन्ते ग्रन्थविस्तरे ।**

**सर्वे ते ब्रह्मयोगस्य कलां नार्हन्ति षोडशीम् ।।**

अपिचाग्रे ज्ञानयोगस्य भक्तियोगस्यायमुल्लेखो विद्यते। ज्ञानयोगेन परमेश्वरं सदाशिवं यजेत आहोश्विद् वैराग्यजनकेन उत्तमेन भक्तियोगेन शिवं समाराधयेत----

**ज्ञानयोगेन मां तस्माद् यजेत परमेश्वरम् ।**
**अथवा भक्तियोगेन वैराग्येण परेण तु ।।**

किञ्च सकुटम्बस्य शिवशरणागतिः प्रोक्ता कर्मयोगद्वारा तत्प्रसादेन वर्तनस्याप्युपदेशो दत्तोऽस्ति----

**प्रपद्यन्तां सपत्नीकाः सपुत्राः शरणं शिवम् ।**
**वर्तध्वं तत्प्रसादेन कर्मयोगेन शङ्करम् ।।**

पाशुपतेन योगेन जीवग्रन्थिविमुक्तये ज्योतिः स्वरूपिणः शिवस्याराधनाय उपदेशो दत्तोऽस्ति----

**चिन्तयेत् सर्वमीशानं परं ज्योतिः स्वरूपिणम् ।**
**एष पाशुपतो योगः पशुपाशविमुक्तये ।।**

योगो द्विविधः, ज्ञानायोगः कर्मयोगश्च। कर्मयोगं विना ज्ञानयोगो न सिध्यति। अतः क्रियायोगरतो योगी श्रद्धया हरिमर्चयेत् (३३।३१-३२) अहिंसा-सत्य-अक्रोध-ब्रह्चर्य-अपिग्रह-अनीर्ष्यादयो योगयोरूभयोः समानं पालनं कुर्वीत। किञ्च सनातनो विष्णुरेव चराचरात्मकं विश्वमस्तीति निश्चित्य द्वयोर्योगयोरनुष्ठानं कुर्वीत।

क्रियायोगपरो योगी मुक्तयर्थं शमादिगुणतत्परो विष्णु समर्चयेत्। मनोवाक्कायकर्मभिः सर्वलोकहितोपदेशोपदष्टुः पूजनं क्रियायोग उच्यते। यश्च सर्वान्तर्यामिनं जगत्कारणं नारायणं स्तोत्रादिभिः स्तौति स सर्वयोगी निगद्यते। उपवासादिभिः पुराणश्रवणादिभिः पुष्पाद्यैश्च विष्णोरर्चनं क्रियायोगत्वेन प्रसिद्धम्। एवं क्रियायोगरतानां विष्णुभक्तिमतां पूर्वजन्मार्जितानि सर्वाणि पापानि नश्यन्ति। पापक्षयाद् विशुद्धमतिरुत्तमं ज्ञानं वाञ्छति। विष्णुः स्थावरजङ्गमात्मकमिदं विश्वं व्याप्य स्थित इत्येवं जायमानं ज्ञानं योगजं मोक्षदं च ज्ञेयम्।

गीतासारकथनप्रसङ्गे ध्यानयोगः, कर्मयोगः, सांख्ययोगः, भक्तियोगश्चेति चत्वारो योगा निर्दिष्टाः सन्ति----

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ।।

किञ्च सनत्कुमारेण योगज्ञानाय पृष्ठः पितामहः तस्मै क्रियायोगवर्णनप्रसङ्गे द्वादशपलकस्य स्वरूपस्य वर्णनं कृतमस्ति----

योगं जिगमिषुस्तात ब्रह्माणं समचूदुम् ।
स चोक्तवान् मां पुत्रार्थे तस्मात्त्वं दातुमर्हति ।।
द्वादशारं तथा चक्रं षण्णामृर्द्धियुतं तथा ।

त्रिव्यूहमेकमूर्तिश्च तथोक्तः परमेश्वरः ।।
एतत्तवोक्तं देवस्य रूपं द्वादशपत्रकम् ।

एवं तत्तत्पुराणेषु योगस्य भेदाः स्पष्टं प्रतिपादिताः सन्ति। विस्तरं तु तत्रैव द्रष्टव्यम्।

न केवलं पद्मासनेन नापि नासिकाग्रावलोकनमात्रेण योगसिद्धिः संभवति, किन्तु मनस इन्द्रियाणाञ्च संयोग एव योगो निगद्यते निगद्यते योगिभिः----

न च पद्मासनाद् योगो न नासाग्रनिरीक्षणात् ।
मनसश्चेन्द्रियाणाञ्च संयोगो योग उच्यते ।।

चित्तस्य वृत्तेर्निरोधो योग उच्यते। किं वा आत्मनः सर्वार्थज्ञाननिष्पतिर्योगो निगद्यते----

सर्वार्थज्ञाननिष्पत्तिराश्रयो योग उच्यते ।
योगो निरोधो वृत्तेस्तु चित्तस्य द्विजसत्तमाः ।।

प्रत्ययान्तरनियोगतः ईश्वरे एकचित्तता योगः प्रोक्तः, अन्यानि च तत् साधनानि सन्ति----

मय्यैकचित्ततायोगः प्रत्ययान्तरनियोगतः ।
तत्साधनानि चान्यानि युष्माकं कथितानि वै ।।

हिमालयस्य प्रश्ने देव्या प्रोक्तं यद् योगो न आकाशे, नापि भूमौ, न च रसातले तिष्ठति, किन्तु योगविद्याविशारदा जीवात्मपरमात्मनोरैक्यं योगं वदन्ति----

**न योगो नभसः पृष्ठे न भूमौ न रसातले ।**
**ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः ।।**

आत्मज्ञानप्रयत्नभूतयमनियमादिसापेक्षया विशिष्टा मनसो गतिःऽतस्या ब्रह्मणा सह संयोगः योग उच्यते----

**आत्मप्रयत्नसापेक्षा विशिष्टा या मनो गतिः ।**
**तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ।।**

निरुद्धवृत्यन्तरस्य चित्तस्य शिवे या निश्चला वृत्तिः सा योगः प्रोच्यते। किञ्च तत्रैव १०अध्याये सनातनो धर्मश्चतुर्भिः पादैः युक्तोऽस्ति। ते च चत्वारः पादाः ज्ञानं क्रिया चर्या योगश्च। तत्र योगस्य लक्षणं पूर्वोक्तेन मार्गेण तस्मिन् अवस्थितचेतसो वृत्यन्तरनिरोधो योगः अभिधीयते (१०।३२) विचारे क्रियमाणे उभयोरेव लक्षणयोरेकत्रैव पर्यवसानं भवति।

गाण्डीवधन्वना अर्जुनेन पृष्टो भगवान् नारदो योगस्वरूपमेव मुक्तवान्----

**चित्तवृत्तिनिरोधाख्यं योगतत्वं प्रकीर्तितम् ।।**

काशीखण्डस्य ४१अध्याये च जीवात्मपरमात्मनोरैक्यमेव मुख्यो योगशब्दार्थ इति निश्चेतुं योगो विव्रियते। बुधैः आत्ममनसोः संयोगो योग उच्यते। कैश्चित् प्राणापानयोः समायोग एव योगो मन्यते। अपण्डितैश्च विषयेन्द्रियसंयोगो योगो निगद्यते। विषयासक्तचेतसां सचेतसां ज्ञानस्य मुक्तेश्च प्राप्तिरतिकठिनाश्चस्ति। दुर्निवारा या चञ्चला मनोवृत्तिः सा यावन्न निवर्तते तावद् जीवब्रह्मणोरैक्यस्य योगस्य निकट वर्तिनी वार्तापि न सम्भवति। यो मनो वृत्तिहीनं कृत्वा क्षेत्रज्ञे आत्मनि प्रविलाप्य मुक्तो भवति स योगमुच्यते।

किञ्च चक्षुरादीनि वहिर्मुखानीन्द्रियाणि अन्तर्मुखानि कृत्वा पुनरिन्द्रियग्रामं मनसि मनश्च जीवात्मनि संयोजयेत् , भूयः सर्वभावविनिर्मुक्तं जीवात्मानं तत्पदार्थे विशुद्धे सर्वभेदरहिते आनन्दस्वरूपे परमात्मनि एकीकुर्यात्। एतदेव ध्यानं योगो विद्यते शेषं ग्रन्थविस्तरमात्रम्।

यद्येवं भूमो योगो वर्तते तर्हि सर्वेषां चेतसि कथं न संभवति सर्वलोकेषु यत् प्रत्यग् ब्रह्मैक्यं न स्फुरति तदस्तीतिकथ्यमानमपि विरुध्यते तद् आज्ञानं हृदयेषु नोल्लसति। यथा अविवाहिता कुमारी स्त्रीभिः कथ्यमानमपि भर्तृसंयोगजन्यं सुखं स्वसंवेद्यत्वाद् न जानाति, यथा वा जन्मान्धः प्रज्वलन्तीमपि दीपशिखां न पश्यति तथैव स्वसंवेद्यं प्रत्यग्ब्रह्मैक्यं अयोगी नैव जानाति, किन्तु तद् दृढेन

योगाभ्यासेनैव ज्ञातुं शक्यते। कस्यचिद् बोधनेन तस्य ज्ञानं न भवति नित्याभ्यसनशीलेन योगिना स्वसंवेद्यं तद् ब्रह्म स्वयमेवानुभूयते, किन्तु वाङ्मनोभ्यामनिर्देश्यं सनातनं ब्रह्म यदा कदाचिदभ्यासवता लब्धुं न शक्यते। यथा वाताहतमुदकमेकक्षणमपि न तिष्ठति तथैव चितमपि स्थिरं न भवितुमर्हति। अतस्तन्न विश्वसेत्। चितस्यस्थैर्यहितवे प्राणवायुं स्थिरीकृत्य निरुन्धीत। मनसः स्थिरीकरणार्थषडङ्गं योगं समभ्यसेत्।

मनसो निग्रहः परमो योगः उच्यते। यथाश्वचारको दम्यस्याश्वस्य गतिं स्वानुकूलां कर्तुं शनैः शनैः तमनुसरन्नेव वशयति तथैव योगी मनोऽनुरुनधन्नेव वशे नयेत्। अतो यावन्मनो नानुकूलं भवेत् तावत्तत्वविवेचनद्वारा भूयो भूयोऽभ्यसेत्। निर्विणस्य विरक्तस्य पुरुषस्य मनोऽनुचिन्तया दौरात्म्यं त्यजति यमादिर्भिर्योगपथैः तत्त्वचिन्तनेन उपासनया च मनोध्याने युञ्जीत। दैवात् प्रमादेन विगर्हितं कर्म कुर्वतोपि योगिनोऽहं योगाग्निना भस्मसाद्भवति----

**एष वै परमो योगः मनसः संग्रहः स्मृतः ।**
**हृदयज्ञत्वमन्विच्छन् दध्यस्येवार्वतो मुहुः ।।**

विशुद्धं ज्ञानं योगः उच्यते तञ्च विद्वांसो मोक्षदं वदन्ति। परापरभेदादात्मा द्विविधः। तत्र पर आत्मा परमात्मा, अपर आत्मा च जीवात्मा प्रोच्यते। परो निर्गुणः अपरश्चाहंकारयुतः कथ्यते। तयोरभेदज्ञानं वा योगोऽभिधीयते। पञ्चभूतात्मके

देहे यः साक्षी हृदये स्थितः स सद्भिरपर उच्यते। परमात्मा च परः कथ्यते। शरीरं क्षेत्रं तत्र स्थितः क्षेत्रज्ञो निगद्यते। स चाव्यक्तः शुद्धः परिपूर्णश्चास्ति। यदा जीवात्मपरमात्मनोरभेदज्ञानं जायते तदा परात्मनः पाशश्छिद्यते जगन्मयः परमात्मा एकः शुद्ध अक्षरो नित्यश्चास्ति, परन्तु पुरुषाणां विज्ञानभेदेन भेदवानिव लक्ष्यते।

वेदान्तमतानुसारं ब्रह्म एकमद्वितीयञ्चास्ति। ततः परं किमपि न विद्यते। निर्गुणस्य परमात्मनो न किञ्चित् कर्म न कार्यं नापि रूपं न च वर्णकर्तृत्वं भोक्तृत्वञ्चास्ति। तत्सर्वहेतूनां निदानं सर्वतेजसां परं तेजोऽस्ति। ततः परं किमपि नास्ति। अतो मुक्तिहेतवे तदवश्यं ज्ञेयम्। शब्दब्रह्ममयैः तत्त्वमस्यादिभिर्महावाक्यैः जायमानं ज्ञानं मोक्षस्य परमं साधनमस्ति। सम्यग्ज्ञानविहीनानां जगद्विविधं दृश्यते। परमज्ञानिनां च इदं विश्वं परब्रह्मात्मकं दरीदृश्यते। आनन्दस्वरूपं निर्गुणं परात्परतरं ब्रह्म एकमेवास्ति, परन्तु भेदज्ञानेननानेकरूपधरं प्रतीयते। मायिनो मायया परमात्मनि भेदं पश्यन्ति। अतो मुमुक्षुभिः युक्तिपूर्वकं मायात्यागो विधेयः। सा च माया न सद्रूपा नापि असद्रूपा नवोभयात्मिका। अतोऽनिर्वाच्या भेदबुद्धिप्रदायिनी विज्ञेया। अज्ञानशब्देन मायाया एव ग्रहणं भवति। अतो जितमायिनमज्ञानं विनश्यति। ज्ञानशब्देन सनातनं ब्रह्म कथ्यते। ज्ञानिनां हृदये परमात्मा निरन्तरं प्रतिभाति। अतो योगिना योगेन अज्ञानस्य नाशो विधेयः।

ब्रह्मज्ञानप्रङ्गे आत्ममानसप्रत्यक्षा मनसो या विशिष्टा गतिस्तस्या ब्रह्मणि संयोगे योग इति सामान्यतो योगस्य लक्षणं कृतम्----

**आत्ममानसप्रत्यक्षा विशिष्टा या मनोगतिः ।**

**तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ।।**

यथा मन्थनादग्निर्दृश्यते तथैव ध्यानेन हरिदृश्यते। ब्रह्मात्मनोर्यदेकत्वं जायते तदुत्तमो योगः कथ्यते। किञ्च २२८अध्याये ब्रह्मणि एकचित्तता योगः पौच्यते--

**मेलनाद् दृश्यते ह्यग्निस्तद्वद् ध्यानेन वै हरिः ।**

**ब्रह्मात्मनोर्यदैकत्वं स योगश्चोत्तमोत्तमः ।।**

**अद्वैतं सांख्यमित्याहुः योंगस्तत्रैकचितता ।।**

## योगसिद्धिविमर्शः

पुराणानि सन्ति भारतीयसंस्कृतेः समस्तानां विद्यानाञ्च आकरः। तत्र स्थाने स्थाने यौगिकप्रक्रियाया योगसिद्धेश्चापि समुल्लेखो विद्यते। योगदर्शनस्य प्रायः सर्वे विषयाः सन्ति प्रायोगिकाः। अतो दर्शनमिदं सर्वदैव आस्तिक-नास्तिकैः समानं समाद्रियते। योगस्यावान्तरविषयेषु स्यान्नाम केषाञ्चिद् विदुषां विचारवैविध्यम् परं क्रियांशानां प्रयोगे न कस्याप्यस्ति काचिद् विमतिः।

यमनियमादिभिः शुद्धान्तःकरणः तत्तद्धारणया प्राप्तसिद्धिः योगी सर्वं कर्तुं शक्नोति। ऐन्द्रजालिकक्रियासु प्रायः दृक्शक्तिस्तम्भनप्रक्रिया दृश्यते। इन्द्रजाल-क्रियाप्रदर्शनकोऽनेकसंयोगवियोगरूपिणीं क्रियां प्रदर्शयन् इन्द्रजालविद्यया दर्शकानां दर्शनानि स्मम्भयति येन द्रष्टारः तस्य तत्तत्पदार्थसंयोगवियोगकार्यकलापं ज्ञातुमसमर्था भवन्ति।

यथेन्द्रजालक्रीडाप्रदर्शकः विविधां क्रियां प्रदर्शयन् इन्द्रजालविद्यया दर्शक दर्शनानि स्तम्भयति, येन द्रष्टारः तस्य तत्तत्कार्यकलापं सम्यगवगन्तुं न पारयन्ति तथैव योगी दृक्शक्तिस्तम्भक्रियया परकीयदृष्टितोऽन्तर्दधाति, येनोन्मीलितनेत्रोऽपि पुमान् स्तम्भितदृक्शक्तित्वान्न योगिनं द्रष्टुं शक्नुवन्ति। यदा इन्द्रजालस्य साधारणक्रियया दृष्टिशक्तिः स्तम्भिता भवति तदा योगिभिः संयमक्रियया किन्न भवितुमर्हति?

शरीरे प्रवेशनिर्गममार्गयोः यावत्यो नाड्यः सन्ति तासां परिज्ञानेन चित्तस्य परशरीरे प्रवेशः सम्भवति। योगसमाधिना स्थूलशरीरात् सूक्ष्मशरीरस्य बन्धनं शिथिलं भवति। संयमद्वारा चेतसो गमनागमनमार्गीयधमनीनां परिज्ञानेन सूक्ष्मशरीरस्य कुत्रापि प्रवेशक्रियायाः, निर्गमनक्रियायाश्च परिज्ञानं योगिनो जायते। तदानीं योगी स्वेच्छया स्वशरीरान्निर्गत्य परकाये प्रवेष्टुमर्हति, श्रीमद्भागवतस्यैकादशस्कन्धे षोडशेऽध्याये लिखितमस्ति यत् परस्य शरीरे प्रवेष्टुकामो योगी तत्रात्मनं भावयन्

यथा भ्रमर एकस्मात् पुष्पात् पुष्पान्तरं प्रयाति तथैवात्मशरीराद् अन्यस्य शरीरे प्रविशति।

यदा योगी संयमं द्वारीकृत्य परकीयमन्तः करणं प्रविशति, तदासौ तद् विषयेषु संयमं कुर्वाणः परकीयचितस्य सुविस्तृतं परिज्ञानं सम्पादयति। साधको योगक्रियायामग्रेसरन् यदा समाधिमासादयति तदैव परकायप्रवेशयोग्यतामधिकरोति। योगी यमनियमादिना आत्मबलं प्राप्य निजासनजयेन स्थूलं शरीरं विजित्य प्राणायामेन प्राणान् वशीकृत्य प्राणमयकोशसहितं सूक्ष्मदेहं स्थूलदेहान्निस्सार्य प्राणशक्तिद्वारा परकायप्रवेशस्य ततो निर्गमनस्य च शक्तिं लभते। कस्यापि जीवस्यान्तःकरणं परकीयान्तः करणसंम्बन्धं विधाय परेषामन्तः करणभावं गृह्णाति।

यथा मधुकरराजः यत्र यत्र गच्छति तत्र तत्रान्या अपि मधुमक्षिकाः सहैव गच्छन्ति तथैव परकायप्रवेशसमये जीवने सह तदीयानि इन्द्रियाणि अपि गच्छन्ति। परस्य काये प्रतिष्ठो योगी तत्र स्वशरीरवद् व्यवहरति। संयमद्वारा समानवायोः विजयेन योगी तेजः पुञ्जमयो जायते, यतः समानवायुः समत्वमुत्पादयति। समत्वेन च गुणेन साधके सर्वा शक्तयः समाकृष्यन्ते। यथा मर्यादावान् समभावसम्पन्नः समुद्रः भूमिस्थितान् जलराशीन् नदीद्वारा स्वस्मिन् समाकर्षति। या वा समदर्शी भगवान् भास्करः स्वकीयकरणैः इतस्ततो नद-नदी सर्वरादिषु विकीर्णान् जलरसान्

स्वस्मिन् समाकर्षति तथैव शरीरस्थितः समानो वायुः स्वरूपतो वियुज्यमानः विकीर्णां तेजः शक्तिं समाकृष्य योगिनः शरीरं तेजोमयं विधत्ते। यथा वैज्ञानिका यन्त्रक्रियाद्वारा प्राणिनां छायारूपचिह्नानां धारणशक्तिं समुत्थाप्य फोटोग्राफर नामके यन्त्रे मनुष्यादीनां मूर्तीः यथावत् प्रकाशयन्ति तथैव योगिनोऽपि पूर्वजन्मसंस्कारेषु संयमेन पूर्वजन्मज्ञानं, परजन्मसंस्कारेषु परजन्मज्ञानं कर्तुं प्रभवन्ति।

यथा रूपविषयसंयमेन योगिनः शरीरस्वरूपं केनापि द्रष्टुं न शक्यते तथैव शब्दविषयकसंयमेन श्रोत्राग्राह्यशक्तिरपि स्तम्भिता भवति, येन योगिनः समुच्चारितशब्दमपि न कश्चित् श्रोतुमर्हति। एवं स्पर्शरसगन्धानां संयमेन योगिनः शरीरस्य स्पर्शरसगन्धानपि पार्श्वस्थः पुरुषः नावगन्तुं प्रभवति।

यथा समेषां शब्दानामाश्रय आकाशः तथैव समस्तानां प्राणिनां कर्णेन्द्रिया-धारोऽप्याकाश एव। यथा दाहिकया शक्त्या साकं पावकस्य संबन्धः, तथैव शब्देन सहाकाशस्य संबन्धो विद्यते। आकाशे एकस्मिन् स्थाने समुच्चरितः शब्दः स्थानान्तरे गच्छति, यतस्तयोर्मध्ये आकाशातिरिक्तं किमप्यन्यन्नास्ति। अतः शब्दाधार आकाश एवं सिध्यति। कर्मेन्द्रियस्य आकाशसंबन्धाद् एव शब्दः श्रूयते। पिहिते कर्णे आकाश संबन्ध इति निश्चीयते। आकाशस्यावरणराहित्यात् सर्वव्यापित्वे नास्ति कश्चित् सन्देहलेशः। तथा च कर्णेन्द्रियाकाशयोः आश्रयाश्रयिभावसंबन्धे

संयमेन योगिना दिव्या शक्तिरधिगम्यते। यथा सूक्ष्मादपि सूक्ष्मः, निगूढादपि निगूढः, अति दूरस्थोऽपि शब्दः श्रूयते योगिना।

स्थूलशरीरकाशयोः संबन्धे संयममनुतिष्ठन् योगी यदा लघुतरतूलादिपदार्थेषु धारणां कुर्यात्तदा तस्मिन् लघुत्वसिद्धिः जायते, तया योगी यथेच्छमाकाशे भ्रमति, तिष्ठति स्थानात् स्थानान्तरञ्च गन्तुं प्रभवति।

यदा योगी संयमेन भूतानां विजयं कुरुते तदा स्वत एव प्रकृतिः तदधीनतां प्रतिपद्यते। यथा गावः स्ववत्सान् स्वतो दुग्धं पाययन्ति तथैव पञ्चमहाभूतविजयेन वशीभूता प्रकृतिः स्वयमेव योगिनं सेवते।

सिद्धिर्द्विविधा परा अपरा च। तत्र विषयसंबन्धिन्यः अपरा सिद्धयो मुमुक्षु-भिर्योगिभिः हेयाः। स्वस्वरूपानुभवोपयोगिनी परा सिद्धिः। तत्र परासिद्धे तदुपयोगिन्यः एव सिद्धयो योगिभिरुपादेयाः, हेयाश्च विषयुसंबन्धिन्य अपराः सिद्धयः। यदि साधकः तीव्रवैराग्ययुक्तः मनसः सुदृढतया योगैश्वर्यैभ्यो मुखं परावर्तयन् तत्र न मुह्यति तर्हि शान्तिमये तत्स्थानं प्राप्नोति, यत्र गमननेन निखिला अपि मनोवासना पूर्णतामापद्यन्ते। सत्त्वगुणप्रभावेण रजस्तमोमले अपसारिते अन्तः करणे च निर्मलता-मुपगते ऋतम्भराख्या पूर्णज्ञानमयी बुद्धिरुदयते। मलमलीमसे ऽन्तः करणे भगवत्

साक्षात्कारो न संभवति, अपि तु मलरहितं निर्मलमन्तः करणं भगवदद्दर्शनाय समर्थं भवति।

साधनवैराग्याभ्यां पक्षाभ्यामुड्डीयमानः साधको हंसः आत्मदर्शनसामर्थ्यं लभमानः तीव्रवैराग्योदयाद् विविधे चाकचिक्ये ग्रस्तो न भवति, अपि तु शनैः शनैः भगवद्दर्शनाधिकारी भवन् परं कल्याणस्वरूपं कैवल्यपदमासादयति। यदा सत्त्वगुणस्य प्रबलप्रवाहाद् रजस्तमसो र्मलं पूर्णरूपेणापसर्पीति तदा पुरुषः स्वकीयं यथार्थस्वरूपमधिगच्छति। यथैकोऽग्निस्फुलिङ्गोऽनेकानग्निस्फुलिङ्गानुत्पादयति तथैव योगबलेन एकमन्तःकरणमनेकत्वं प्रतिपद्यते। महत्तत्त्वमधिगच्छन् योगी यथेच्छमनेकानि अन्तः करणानि स्त्रष्टुमर्हति। योगसाधनेन स्वस्वरूपज्ञानमधिगतवा आत्मज्ञानिना योगिना सिद्धयः स्वत एव प्राप्यन्ते। यद्यपि स्वरूपोपलब्धौ सत्यां साधकः प्रकृतिलीलया न पुनर्ग्रस्यते, परन्तु व्युत्थानदशाजनितासु सिद्धिषु समाकृष्टः सन् जडभरतवद् विपन्नो भवितुमर्हति। अतो मुमुक्षुभिः सिद्धयो हेया एव।

योगशास्त्रे साधकः त्रिविधोऽभिमतः, अधमो मध्यमः, उत्तमश्च। तत्र साधनपथे अग्रेसरन् सिद्धियोगी साधकोऽधमो निगद्यते। सिद्धीरवलोकमानोऽपि तद्भोगपराङ्मुखो मध्यमः। यस्तु न कथञ्चितु सिद्धिमीक्षते नापि समीहते स उत्तमः। अतः परवैराग्यसनाथ उत्तमसाधक एव कैवल्यस्य सर्वथा अधिकारी, तेनेव च त्वरितं कैवलयमासाद्यते।

यथावद् योगसाधनानुष्ठानेन ज्ञानोदये योगिनामन्तः करणतो निखिलः सन्देहो दूरी भवति। अतो योगिना यथेच्छं समेषां वस्तूनां यथार्थज्ञानं जायते। योगी यत्रैव स्वीयां ज्ञानदृष्टिं प्रसारयति तत्रैव तस्य बुद्धिः देशकालपरिच्छेदरहिता अभ्रान्ता सती प्रयति, तया च तत्र त्रिकालदर्शित्वमुपपद्यते।

यदा साधकः मनः प्राणमिन्द्रियाणि च वशे कृत्वा स्वकीयं चित्तं परमात्मनि नियोजयति तदा ईश्वरं भावयतस्तस्य समक्षं वह्व्यः सिद्धय उपतिष्ठन्ते। किञ्च श्रीमद्भागवतस्य एकादशस्कन्धे पञ्चमाध्याये----

**कया धारणया कास्विद् कथंस्वित् सिद्धिरच्युत ! ।**
**कति वा सिद्धयो ब्रूहि योगिनां सिद्धिदो भवान् ।।**

इत्युद्धवस्य प्रश्ने भगवता श्रीकृष्णोनोक्तं यद् -धारयोगपारगैः योनिभिः अष्टादशसिद्धयः प्रोक्ताः। तासु अणिमादयः अष्टसिद्धयस्तु प्रधानतया मय्येव तिष्ठन्ति अवशिष्टा दश सत्त्वगुणविकाशादन्येषु जायन्ते----

**एता मे सिद्धयः सौम्य अष्टौ चोत्पत्तिका मताः**
**अणिमा लघिमा चैव महिमा गरिमा तथा ।**
**प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः ।।**

तत्र अणिमा-- स्वेच्छया शरीरस्य अणुत्वसम्पादनं येनातिसूक्ष्मत्वात् जलवत् शिलायामपि अन्तः प्रवेष्टु प्रभवति साधकः।

लघिमा-- स्थूलस्यापि शरीरस्य लघुत्वसम्पादम् , येन तरणिकिरणमालम्व्य सूर्यलोकं प्रयाति योगी।

गरिमा-- देहस्य यथेच्छं गुरुत्वसम्पादनम्।

महिमा-- सर्वतो महान् भवति।

प्राप्तिः-- स्वेच्छया सर्वपदार्थाधिगतिः। यः पाणिपल्लवेन भूतलस्थ एव योगी शशिनं स्पृशति।

प्राकाम्यम्-- इच्छानभिघातः येनेलायाम् (पृथिव्याम्) उन्मज्जति निमज्जति च यथा पयसि।

ईशित्वम्-- सर्वेषां भौतिकपदार्थानामुत्पत्तिस्थितिलयविधायिनी शक्तिः, यथा सर्वभूतोत्पत्ति-स्थिति-लियेशो भवति योगी। एतया सिद्धया योगिनी नूतनां सृष्टिमपि कर्तुं प्रभवन्ति।

वशित्वम्-- पञ्चानां भूतानां स्ववशीकारो येन भूतभौतिकं सकलं वस्तुवश्यं भवति। एतया सिद्ध्या योगिनः स्वयं कस्यापि वशे अविद्यमाना अपि सर्वान् स्ववशे कुर्वन्ति। पञ्चभूतैः यथेच्छं कार्याणि च कारयितुं प्रभवन्ति।

सिद्धीरेताः समुपलभ्य योगिभिः सर्वं कर्तुं शक्यते। पाषाणे प्रवेष्टुं पार्यते, आतरणरहिते वियत्यपि तिरोहितेन भूयते, पञ्चापि भूतानि योगिनां क्लेशदानि न भवति, योगी शिलायां प्रवेष्टुमर्हति, जलं तमार्द्रं कर्तुं न शक्नोति। पावकः तदीयं शरीरं न दहति, न च वायुः शुष्कं कर्तुमर्हति। इमा अष्टौ सिद्ध्य ईश्वरीयाः सन्ति। एताभि र्योगिन ईश्वरस्वरूपतां प्रतिपद्यन्ते। ईश्वरानुकम्पया एवैताः समाधिगम्यन्ते।

आसु अष्टसु सिद्धिषु तिस्त्रः अणिमा-महिमा-लघिमासिद्धयस्तु शारीरिक्यः सन्ति। एका प्राप्तिरैन्द्रियकी सिद्धरस्ति। इच्छनुसारं लौकिकपारलौकिपदार्थानुभाविका प्रकाम्यसिद्धिः। मायायाः तत्कार्यस्य च सञ्चालनमीशिता शक्तिः। गुणेषु असङ्ग वशितासिद्धिः। स्वेच्छया कामनासुखप्राप्तिः कामवसायिता नाम्नी अष्टमी सिद्धिः। एता अष्टापि सिद्धयो मयि स्वभावत एव तिष्ठन्ति। येभ्योऽहं ददामि तै अंशतः प्राप्यन्ते।

एतदतिरिक्ता अनूर्मित्व-दूरदर्शन-मनोजवत्व-कामरूपत्व-परकायप्रवेशन-स्वच्छन्दमृत्यु-अप्सरोभिः सह देवक्रीडादर्शन-संकल्पसिद्धि अप्रितिहगत्याज्ञा-इतीमा दश सिद्धयः सत्त्वगुणस्य विशेषविकासाद् भवन्ति। त्रिकालज्ञत्व-द्वन्द्वराहित्य-परचिताद्यभिज्ञता-अग्नि-सूर्य-जल-विषादीनां शक्ति-प्रतिष्टाम्भनत्व-अपराजयत्वानि इत्येताः पञ्च सिद्धयः योगिनां भवन्ति।

किंच कया धारणया कीदृशी सिद्धिरवाप्यते इत्यपि तत्र विस्तरतो वर्णितमस्ति। योगधारणाभिः प्राप्यमानसिद्धीनां नामनिर्देशोऽपि कृतोऽस्ति। तथा हि यः पञ्चभूतानां सूक्ष्माः तन्मात्रा ईश्वरशरीरमितिबुद्ध्या तन्मात्रकं मे शरीरमिति भावयन् साधकः अणिमानं सिद्धिं प्राप्नोति। यः स्वीयं मनो महत्त्वाकारं कृत्वा महत्तत्त्वरूपेण मां ध्यायति, स महिमानं सिद्धिमवाप्नोति। यः वाय्वादीनां चतुर्णां भूतानां परमाणून् मदात्मकान् मत्वा चित्तं तदाकारं कुरुते स लघिमानं सिद्धिं प्राप्नोति। यः सात्त्विकमहङ्कारं मत्स्वरूपं मत्वा तत्र धारणां करोति स प्राप्तिसिद्धिं प्राप्नोति। यः महत्यात्मनि मयि मानसं धारयति स प्रकाम्यसिद्धिमवाप्नोति। यथा इच्छानुसारं सर्वे भोगाः लभ्यन्ते।

यः कालस्वरूपे विश्वरूपे मयि धारणां करोति स ईशित्वसिद्धिमाप्नोति। अनया जीवान् स्वेच्छया प्रेरयितुं सामर्थ्यमुपलभ्यते। यः तुरीयाख्ये भगवति नारायणे

मयि मनो धारयति स वशित्वसिद्धिं लभते। यः निर्गुणे ब्रह्मणि मयि नैजं निर्मलं मनो धारयति स कामावसायित्वसिद्धिं प्राप्नोति यथा तस्य सर्वाः कामनाः पूर्णाः भवन्ति। श्वेतदीपपतौ शुद्धधर्ममये मयि चित्तं धारयन् योगी पडूर्मिरहितो भवति श्वेततां च प्रयाति। य आकाशात्मनि मयि मनसा सह अनहतनादं चिन्तयति स दूरश्रवणसिद्धिं लभते। यो योगी नेत्रं सूर्ये सूर्यञ्च नेत्रे संयोज्य मां मनसा ध्यायति, स सूक्ष्मदृग् सन् दुर्द-र्शनसिद्धिमवाप्नोति, यया सः समस्तं विश्वं पश्यति। यः मनोदेहं च प्राणैः सह मयि संयोज्य मम धारणं कुर्यात्तर्हि मनोजवत्वसिद्धिं लभते। अनया यत्रेच्छति तत्र तत्क्षणे समुपगच्छति। यः योगी मनः उपादाय (उपादानकारणं कृत्वा) यद्यत् रूपं बिभूषति तत्तदनुकूलं रूपं धत्ते इत्येषा कामरूपसिद्धिः। परकायप्रवेश-मिच्छन् योगी एवं भावयेत् यदहं तस्मिन्नेव शरीरऽस्मि। एवं भावनया तस्य प्राणवायुः यथा भ्रमर एकं पुष्पं परिहृत्य पुष्पान्तरे गच्छति तथैव आत्मशरीरं त्यक्त्वा योगी परकाये प्रविशति।

सकामानां साधकानां हिताय नानाविधानां सिद्धिनां वर्णनं पुराणेतिहासयोः, योगशास्त्रेषु च उपलभ्यन्ते। सिद्धीनामनेकेषु भेदेषु सत्स्वपि योगदर्शनस्य विभूतिपादे भगवता पतञ्जलिना सिद्धेः त्रयस्त्रिंशद्भेदाः समाम्नताः। तासु अष्टौ सिद्धयो मुख्याः सन्ति। पञ्चमहाभूतविजयानन्तरम् अणिमादयः पूर्वोक्ताः अष्टौ सिद्धयः स्वयमुपतिष्ठन्ते।

योगसाधनेन स्वस्वरूपोपलब्धौ यातायामपि पूर्वसंस्कारजन्यां व्युत्थान-दशामधिगतवता योगिना सिद्धयः स्वत एव प्रतिपद्यन्ते। वस्तुतः समाधिजन्ये मुक्तिपदे सिद्धयो विघ्नकारिण्य एव सन्ति। अत एव चञ्चलचेतसो योगिन एव सिद्धिमपेक्षन्ते। सर्वा अपि ताः समाधेः नित्यानन्दशुद्धद्वैतदशायां प्रत्यहूजनिका एव। अत एव योगिनं सावधानीकर्तुं भगवता पतञ्जलिना विभूतिपादे 'ताः समाधावुपसर्गाः व्युत्थाने सिद्धयः' (३।३७) इति योगसूत्रमाविष्कृतम्। यद्यपि स्वस्वरूपोपलब्धौ सत्यां साधकः प्रकृतिलीलया न पुनर्ग्रसतुं शक्यते तथापि व्युत्थानदशाजनितासु सिद्धिषु समातिष्ठन् जडभरतवद् विपन्नो भवितुमर्हतिः इति प्राधान्येन समुन्नतयोगिनं सावधानी कर्तुं सिद्धान्तोऽयं निर्णीतः। अतो लौकिक्यो अलौकिक्यश्च सर्वविधा अपि सिद्धयो मुमुक्षुभिः हेया एव। तथा चोक्तं श्रीधीशगीतायाम्-

**महतो ज्ञानिनश्चैव योगिनोऽपि तपस्विनः ।**
**सिद्धिः सार्थैरनेकैर्हि मोहयन्ती निरन्तरम् ।।**
**आवागमनचक्रेऽस्मिन् स्वविलासात्मके मुहुः ।**
**मोक्षमार्गं च रुन्धाना धूर्णयेद्वै समन्ततः ।।**

वस्तुतः सिद्धयः परमार्थमार्गे वाधिका एव सन्ति। अतः सिद्धिर्न वाञ्छनीया, तत्प्राप्त्या मुमुक्षुयोगिनां योगमार्गे अन्तराया आविर्भवन्ति। सिद्धिभ्यः सकामानां साधकानामप्युदयस्त्ववश्यं भवति, परन्तु मुमुक्षूणां कृते ता वाधिका एव भवन्ति, न साधिकाः---

यस्य चित्तवृत्ति र्भगवदुन्मुखा न भवति, यस्मिन् अल्पीयसी अपि विषयासक्तिः विद्यते। एवम्भूतेन पुंसा यदि सिद्धय उपलब्धाः स्युः तर्हि ताभिः तस्याभिमानं वर्धते। विषयप्राप्तौ भोगे च सिद्धीनामुपयोगो भवति, येन भोगे बाधाया आशङ्का उपतिष्ठते। तस्य विनाशे सिद्धय उपयुज्यन्ते। परिणामे साधकः कंसरावणहिरण्यकशिपुवद् असुरभावापन्नतया क्रूरो भवति। अतः प्राप्तासु सिद्धिषु साधकः तत्र न रमेत, अपितु ता विघ्नरूपा मत्वा परित्यजेत्। अत एव साधकाः ब्रह्मलोकभोगमपि प्राप्य ब्रह्मसामर्थ्यं वोपलभ्य सिद्धिभ्यः पृथक् तिष्ठन्ति। तेषां कृते वास्तविकी सिद्धिस्तु अन्तःकरणस्य सम्यक्शुद्धिरेवास्ति, यत्र भगवदतिरिक्तस्य कस्यापि स्थाने नास्ति। तदुक्तं श्रीमद्भागवते।

योगसूत्रेऽपि 'जन्मौषधिमन्त्रतपः समाधिजाः सिद्धयः, प्रोक्ताः। तत्र जन्मतः सिद्धिर्यथा-परमहंसशुकदेवे, महर्षिकपिलादौ च जन्मत एव सिद्धिरुत्पन्ना। औषधादिनापि सिद्धयः समुत्पद्यन्ते यथा रसायनादिना ताम्रसुवर्णनिर्माणं कायाकल्पकारै रौषधैश्च जरानाशपूर्वकं दीर्घायुष्ट्वाप्राप्तिः यथा महर्षेश्च्यवनस्य। मन्त्रैरपि सिद्धिः प्राप्यते यथा गुटिकादिसद्धिद्वारा आकाशगमनं तान्त्रिकमन्त्रसाधनेन मारणम् , वशीकरणम् उच्चाटनादिकार्यञ्च। तपसाऽपि सिद्धिरधिगम्यते-यथा तपः साधनेन विश्वामित्रस्य ब्राह्मणत्वाधिगमः, भक्तप्रधानस्य नन्दिकेश्वरस्य मनुष्यतो देवत्वप्राप्तिश्च। समाधितः सर्वविधसिद्धिलाभस्तु तृतीयपादे विस्तृतः प्रदर्शित एव। सर्वा अपि सिद्धयः

समाधिसिद्धि भिन्नस्वरूपा एव। यतः सर्वासामपि साहाय्यकारि साधनं समाधिरेव। यः शुकदेवादिभिः प्राक् साधनानि कृतानि अतः वर्तमान जन्मनि सिद्धिरधिगता। ओषधादिनापि शरीरं तादृशमेव जायते यादृशं समाधिना संपद्यते।

राज्ञः शर्यातिः कन्यया सुकन्यया बालसुलभचापल्येन अरण्ये यदा महर्षेः च्यवनस्य चक्षुषी कण्टकेन विद्धे, तदा शर्यातिः सैनिकानां शकृन्मूत्रादि निरोधोऽभवत्।

अपि च शर्यातिः सोमयज्ञे महर्षिणा च्यवनेन स्वकीय भावेण असोमकौ अपि अश्विनीकुमारौ सोमं पायितौ तदसहमानो देवराजः तौ हन्तुं यदा वज्रमाददे तदा महर्षिः च्यवनः सवज्रमिन्द्रस्य बाहुं स्तम्भयामास।

इदं सर्वं पर्यालोच्य महर्षेः च्यवनस्य तपः सिद्धौ न कश्चिदस्ति सन्देहः।

भगवन्तं रामं परावर्तयितुकामाय, सेनापरिजनयुताय भरताय सिद्धैश्वर्येण भरद्वाजेन महर्षिणा विहितं सार्वभौमेनापि राज्ञा विधातुमशक्यमातिथ्यं दर्शं दर्शं कस्य सचेतसो योगसिद्धिविषये सन्देहकलङ्कपङ्कलेशः संभवेत्?

श्रीरामं साक्षात्कर्तुं चित्रकूटगमनसमये तीर्थराजे प्रयागे भरद्वाजाश्रमे निवासय कृतमतिं भरतं भरद्वाजो न्यमन्त्र्य यज्ञशालां प्रविश्य आचम्य नेत्रे प्रमृज्य च निखिलशिल्पकलाकोविदं विश्वकर्माणामाहूय आतिथ्यसामग्रीसम्पादनाय समाज्ञप्तवान्। अथ महर्षिणा आज्ञप्तः सः तत्कालं विविधां शयनासनोपवेशनादिभिः अद्भुतामातिथ्य-सामग्रीमुपस्थापयामास। मानवमात्रदुर्लभानामातिथ्यसामग्रीसम्भारान् समालोक्य अयत्नसिद्धत्वात्, अपूर्वत्वात्, अत्याश्चर्यजनकत्वात्, प्रागुत्पन्नविविधविचित्र-वस्तुसमूहत्वाच्च सर्वे विस्मिता अभूवन्। तथाचोक्तं वाल्मीकीयरामायणे-----

अग्निशालां प्रविश्याथ पीत्वापः परिमृज्य च ।
आतिथ्यस्य क्रियाहेतोर्विश्वकर्माणमाह्वयत् ।।
आह्वये विश्वकर्माणमहं त्वष्टारमेव च ।
आतिथ्यं कर्तुमिच्छामि तत्र मे संविधीयताम् ।।
व्यस्मयन्त मनुष्यास्ते स्वप्नकल्पं तदद्भुतम् ।
दृष्ट्वातिथ्यं कृतं तावद्भरद्वाजमहर्षिणा ।।

....................................

# *पञ्चमोऽध्यायः*

**विषय= भागवतीय दर्शन विवेचनम् ।**

योगाभ्यासनिरूपणम् , सांख्ययोगनिरूपणम् , ज्ञानिनां मोक्षप्राप्तिनिरूपणम् योगविधिवर्णनम् , सांख्यविधिवर्णनम् , योगलक्षणवर्णनम् , अभेदेन सांख्ययोगकथनम्।[१]

क्रियायोगसारवर्णनम् , योगाग्निना सतीदेहदाहवर्णनम् , विष्णुद्वारा योगयुक्तवेदपारगब्राह्मणवत् , सतीप्रशंसा।[२]

२४ तत्त्वानां विचारपूर्वकं, जगदुत्पत्तिक्रमवर्णनम् , केशिध्वज-खाण्डिक्ययोः कथायां, योगबलवर्णनम् , ब्रह्मयोगनिर्णयः।[३]

---

१- ब्रह्मपुराणे

२- पद्मपुराणे क्रियायोगसार

३- विष्णुपुराणे

बुद्धितत्त्वस्य जनन्याः प्रकृतेः चर्चा, दक्षयज्ञे सतीदेहत्यागप्रकारवर्णनम् , योगिनां मृत्युकालवञ्चनम् , योगिनां मृत्युकालवञ्चनम् , आसन-प्राणायाम-विधिवरणम् , ध्यानवाहनादिविधानवर्णनम्। प्रतियुगं शिवस्य योगावतारवर्णनम् , साङ्गयोगवर्णनम् , अन्तरायादिविमर्शः, शैवयोगवर्णनम्।[१]

प्राणायामादिवर्णनम् , प्राणायामस्य शान्त्यादिप्रयोजनानां, निरूपणं योगप्रवृत्तिलक्षणञ्च, योगोपसर्गनिरूपणम् , योगैश्वर्यनिरूपणम् , पाशुपतयोगवर्णनं शौचाचारलक्षणं च, योगिभ्यः श्राद्धे दानमहाफलम्।[२]

सांख्ययोगवर्णन, प्रकृतिपुरुषविवेकेन मोक्षकथनम् ,अष्टाङ्गयोगवर्णनम् , गुणस्वभावानुसारं भक्तियोगनिरूपणम् , योगद्वारा सतीदेहत्यागप्रकारवर्णनम् , ध्यानयोगवर्णनम् , धारणासहितसिद्धवर्णनम् , यमनियमादिवर्णनम् , प्रकृति-पुरुष-विवेकमिर्शः, गुणवृत्तिविजयः, साङ्गक्रियायोगवर्णनम् , मार्कण्डेयक्रियायोग-वर्णनम्।[३]

---

१- शिवपुराणे रुद्रसंहितायाः

२- वायुपुराणे

३- श्रीमद्भागवते

तत्त्वानां निरूपणम् , गुणानां स्वरूपादिकथनम् , गुणलक्ष्मधिकृत्य नारदप्रश्नः गुणपरिज्ञानवर्णनं च, साङ्गयोगमन्त्रसिद्धिसाधनवर्णनम् मूलाधारदिषट्-चक्रनिरूपणं च, नारायण-नारदसंवादे अनन्तायाः प्रकृतेर्नामनिर्वचनपूर्वकं वर्णनं राधारूपाणां चित्रणं सत्त्वरजस्तमः प्रधानानां प्रकृतिस्त्रीरूपाणां वर्णनं चपञ्चमप्रकृतितद्भर्तृगणोत्पत्तिवर्णनम् , भूतशुद्धिप्रकारवर्णनम् शिरोव्रतवर्णनं च।[१]

ध्यानयोगकथनम् , चित्तवृत्तिनिरोधत आत्मपदप्राप्तिनिरूपणम् , पौर्णमासव्रत-प्रसंगे योगनिरूपणम्।[२]

योगाध्यायवर्णनम् मुक्तिलक्षणं प्राणायामादिविमर्शश्च, योगविघ्नवर्णनपुरः सरं योगसिद्धिवर्णनम् , योगपरिचर्यायां यमनियमादिवर्णनम् योगिनामाहारादिवर्णनं च, ओङ्कारमाहात्म्यवर्णनम्।[३]

मुद्रादिलक्षणनिरूपणम् , यमनियमनिरूपणम् , आसन-प्राणायाम-प्रत्याहाराणां विवेचनम् , ध्यानविमर्शः धारणाभेदादिविचारः, समाधिविवेचन-मुपसर्गनिरूपणं च।[४]

---

१- देवीभागवत।

२- नारदीयपुराणे।

३- मार्कण्डयेपुराणे।

४- अग्निपुराणे।

रामानुजोत्पत्तिवर्णनप्रसंगे श्रीकृष्णो योगशास्त्रतत्परः योगेशः कालात्मा च प्रदर्शितः। कपिलशब्दस्य निर्वचनं च कृतमस्ति।

प्रकृतिशब्दार्थविवेचनपूर्वकं प्रकृतेः चित्रणं कृतमस्ति, आध्यात्मिकयोगविवेचनं कृतमस्ति, सांख्यप्रक्रियाविवेचनम्।

योगाचार्याणां तच्छिष्याणां च परम्परानिर्देशः, शिवतत्त्वसाक्षात्काराय योगस्थानवर्णनं प्राणायामवर्णनं ध्यानसमुपासनावर्णनं च। सयोगन्तरायोपसर्गाणां विवरणम् अभ्यासेन विज्ञानशिुद्धिस्थैर्यवर्णनं च, सयोगसिद्धिप्राप्तपुरुषसाधुलक्षणं शिवसाक्षात्कारोपायवर्णनम् , योगिनां प्रशंसावर्णनम् , पशुपतियोगनिरूपणं च, अव्यक्तान्महदादीनामाविर्भावः ततो नानासृष्टिवर्णनं महतः सृष्ट्याभिर्भावश्च, पाशुपतयोगनिरूपणम् , ध्यानयज्ञवर्णनं परतत्त्वे ध्यानवर्णनं च, सविस्तरं पाशुपतयोगवर्णनम् , यतीनां पापशोधनप्राप्यश्चितवर्णनम् , योगिनां स्वलक्ष्यप्राप्तौ समागतारिष्टानां मृत्युसूचकानां निरूपणम् ओङ्कारप्राप्तिलक्षणवर्णनम् , पाशुपतयोगमार्गेण शिवाराधनवर्णनम्।

सांख्ययोगविनिश्चयात्मकाः प्रश्नाः, योगप्राप्तिहेतुनिरूपणम् , सांख्ययोगवैशिष्ट्यवर्णनम्।

सांख्ययोगप्रशंसा अष्टाङ्गयोगवर्णनम् , योगात्सिद्धिप्राप्तिवर्णनम् , योगप्रवृत्तेर्लक्षणं च, क्रियायोगाधिकारादिवर्णनम् , अष्टाङ्गयोगनिरूपणम् , प्राणायामादिविवेचनम् , योगसाधनमहत्त्ववर्णनम् , ज्ञानयोगविवरणम् , योगाख्यानवर्णनं योगाङ्गवर्णनं प्राणायामादिषडङ्गवर्णनं समाधि महत्त्ववर्णनं योगसिद्धिवर्णनञ्च, पाशुपतयोगानुसारं भक्तिवर्णनम्।

अदितिकृतभगवत्स्तुतौ योगिचर्चा, ब्रह्मस्तुतौ योगिचर्चा च, ध्यानयोगप्रशंशा, माहेश्वरयोगविमर्शः योगिनां परम्परावर्णनम् , योगीश्वरवर्णनं शिवविभूतियोगवर्णनम् ध्यानयोगवर्णनं च, कर्मयोगवर्णनम् सवीजनिर्बीजयोगादिवर्णनम् , प्रकृतिपुरुषादिवर्णनम् प्रकृतिपुरुषादिवर्णनम् कर्मयोगवर्णनम् क्रियायोगविधिवर्णनम् अष्टाङ्गयोगवर्णनम् , षडङ्गयोगवर्णनम् , अष्टाङ्गयोगवर्णनम्।

लतितोपाख्याने मुद्रालक्षणवर्णनम् , ध्यानयोगवर्णनम् , प्रकृतिपुरुषविवेचनम्, ध्यायनयोगस्य तत्फलस्य सप्तानां धारणानाञ्च वर्णनं ज्ञानोपलब्धिद्वारा मोक्षप्राप्तेः कथनम् , योगद्वारा परमात्मनः प्राप्तिवर्णनम् , सांख्ययोगयोरन्तरप्रदर्शनपूर्वकं, योगमार्गस्य स्वरूपसाधन-फल-प्रभावाणां वर्णनम् , सांख्ययोगानुसारं तत्साधनस्य फलस्य च वर्णनम् , क्षराक्षरतत्त्वयोः निरूपणं तज्ज्ञानद्वारा मुक्तिकथनं च,

प्रकृतिसंगाद् जीवस्य कर्तृत्वभोक्तृत्वस्वीकारेणस नानायोनिषु जन्मग्रहणवर्णनम् , प्रकृतेः संसर्गदोषाद् जीवस्य पतनवर्णनम् क्षराक्षरयोः प्रकृतिपुरुषायोश्च विषये राज्ञो जनकस्याशङ्का वसिष्ठद्वारा तदुत्तरदानं च, विद्याविद्ययोः क्षराक्षरयोः, प्रकृतिपुरुषयोः तथा विवेकिन उद्धारस्य च वर्णनम् , सांख्ययोगयोः स्वरूपवर्णनम् आत्मज्ञानाद् मुक्तिवर्णनञ्च। क्षराक्षरयोः परमात्मतत्त्वस्य च वर्णनम् जीवस्य नानात्वैकत्वयो दृष्टान्तप्रदर्शनम् , उपदेशाधिकार्यनधिकारिणोः ज्ञानपरम्परायाश्च कथनपूर्वकं वशिष्ठकरालजनकयोः संवादोपंसहारः, याज्ञवल्क्यद्वारा राज्ञो जनकस्योपदेशव्याजेन सांख्यदर्शनानुसारं चतुर्विंशतितत्त्वानां नवसर्गाणाञ्च वर्णनम् , अध्यात्माधिभूताधिदैवतानां वर्णनं तथा सात्त्विक-राजस-तामसभावानां लक्षणं च, सात्त्विक-राजस-तामस-प्राकृतिकमनुष्याणां गति-वर्णनम् , प्रकृतिपुरुषविवेकस्य तत्फलस्य च वर्णनम् , योगवर्णनं तत्साधनेन परब्रह्मपरमात्मनः प्राप्ति वर्णनञ्च च, याज्ञवल्क्यद्वारा विश्वावसुगन्धर्वं प्रति जीवात्म-परमात्मन ऐक्यज्ञानस्य उपदेशं प्रदाय तत्फलस्य मुक्तेः कथनम् , राज्ञो जनकस्य परीक्षार्थमुपस्थितायाः सुलभायाः तच्छरीरे प्रवेशः, जनकद्वारा तत्र दोषारोपणम् , सुलभायाः तन्निराकरणपूर्वकं राज्ञोऽज्ञानित्व साधनवर्णनम्।

सेवकपरिजनयुताय भरताय तपः सिद्ध्यैश्वर्येण भरद्वाजेन विहितस्य सार्वभौमेनापि राज्ञा विधातुमशक्यस्यातिथ्यस्य वर्णनम् , मध्ये समुद्रं सुरसा-हनुमतोर्द्विगुणकाय-वृद्धौ महिमसिद्धिप्रदर्शनम्।

## द्वैताद्वैतसिद्धान्तभेदः

आत्मतत्त्वसम्बन्धे द्वैताद्वैतमतावलम्बिनां महानस्ति मतभेदः। अद्वैतवादिनः स्वरूपावस्थितिरूपायां मोक्षावस्थायाम् आत्मपरमात्मनोः भिन्नतां न मन्यन्ते। तन्मतानुसारं व्यवहारदशायाम् आत्मतत्त्वरूपे परमात्मतत्त्वस्यैव साक्षात्कारो भवति। मोक्षावस्थायामात्मतत्त्वं परमात्मतत्त्वेऽवतिष्ठते। किन्तु द्वैतवादिन आत्मपरमात्मतत्त्वयोः जडतत्त्वेभ्यो विजातीयं भेदं मन्यन्ते, आत्मपरमात्मनोः परस्परं सजातीयं भेदमङ्गीकुर्वन्ति। अर्थात् आत्मपरमात्मानो परस्परं न जडतत्त्ववद् भिन्नौ स्तः, किन्तु एकजातीयावपि तौ पृथक्सत्तात्मकौ स्तः। मोक्षावस्थायामात्मतत्त्वं परमात्मतत्त्वमुपगतं तत्सदृशं दुःखमपहाय ज्ञानात्मकतामानन्दस्वरूपकतां च भजते।

एवं जडतत्त्वसंम्बन्धेऽपि पर्याप्तोऽस्ति तयोर्मतभेदः। अद्वैतवादिनो रज्जौ सर्पस्य शुक्तिकायां च रजतस्य सत्तावत् जडत्त्वानां सत्तां परमात्मतत्त्वान्न भिन्नां मन्यन्ते, तत्रैवारोपितामङ्गीकुर्वन्ति न वास्तविकीम्। एवम् अद्वैतवादिनः जडतत्त्वं सदसद्भ्यामनिर्वाच्यां मायामविद्यां वा मन्यन्ते। तन्मते जगतोऽभिन्ननिमित्तोपादानकारणे ब्रह्मैवास्ति, यतो मायाया ब्रह्मातिरिक्तं कापि सत्ता नास्ति, सा ब्रह्मण एव विशेषशक्तिरस्ति। ब्रह्मणि न कोऽपि परिणामो भवति, तत्सदैकरसं तिष्ठति। जगत उत्पत्तिस्थितिलया मायाया एव परिणामोऽस्ति। तत्केवलं चेतनसत्तायां भ्रमाद्

भासते। सिद्धान्तोऽयं विवर्तनाम्ना प्रसिद्धोऽस्ति। यत्र ब्रह्म जगद्विवर्ति उपादानकारणं स्वीकृतमस्ति। ब्रह्मणः स्वरूप न किञ्चित्परिवर्तनं भवति, किन्तु भ्रमात् परिवर्तितमिव प्रतीयते। द्वैतवादे जडा प्रकृतिरेकं स्वतन्त्रं तत्त्वं स्वीक्रियते। कैवल्यावस्थायामस्या अभावः केवलं मुक्तपुरुषेभ्य एव भवति। अस्याः स्वस्वरूपादभावो न भवति। यतः सा अमुक्तानां कृते तिष्ठत्येव-कृतार्थं प्रति नष्टमप्यनष्टं सदन्यसाधारणत्वात् (योगसूत्रम् २।२२)। सांख्यसूत्रेऽपि "अन्यसृष्ट्युपरागेऽपि न विरज्यते प्रबुद्धरज्जु-तत्त्वस्येवोरगः" (३।६६) "नैरपेक्ष्येऽपि प्रकृत्युपकारे विवेको निमित्तम्"।

प्रकृतिः जगत उपादानकारणमस्ति, जगच्चास्याः कार्यमस्ति। यथा घटादिकार्यमस्ति, मृत्तिका तस्योपादानं कारणम् , कुम्भकारो निमित्तकारणम् पादादिकर्म चास्य प्रयोजनमस्ति, तथैव प्रकृतिः जगत उपादानकारणम् , ब्रह्मनिमित्तकारणम् पुरुषाणां भोगोऽपवर्गश्चैतत् प्रयोजनमस्ति।

जडचेतनतत्त्वसम्बन्धे द्वैताद्वैतिनां सिद्धान्ते वास्तविको मतभेदो नास्ति। साधारणस्यापि वस्तुनो वर्णने विभिन्नलेखकानां साम्यं नोपजायते। लेखकानां विचार रुचि-दृष्टि-लेखनशैलीनामनुसारं लेखेषु विभिन्नता भवत्येव। प्रकृत्यादिपदार्थाः केवमनुभवगम्या एव सन्ति, न कदाचिदप्येते दृष्टिगोचरतामापद्यन्ते। अतः तत्त्ववेत्तॄणां वर्णनपद्धतौ विभिन्नता स्वाभाविकीवास्ते। बाह्यदृष्टयः तत्र कामं विभिन्नतां

वास्तविकीमनुभवन्तु नाम, परन्तु सूक्ष्मतत्त्वदर्शिनां न किञ्चिदस्ति वैविध्यम्।

दुःखात्यन्तनिवृत्तिरुभयोः सिद्धान्तयोरन्तिमं लक्ष्यमस्ति। दुःखनिवृत्तिसाधनं परमात्मतत्त्वस्य ज्ञानमुभयोः समानरूपेण मननीयमस्ति। दुःखकारणस्य जडतत्त्वस्य परमात्मतत्त्वात्पार्थक्यमुभयत्रास्ति समानमेव।

## दर्शनान्तरेषु परस्परं समन्वयः

दार्शनिकतत्त्वस्य विभिन्नानां प्रवाहाणामनुशीलनेन प्रतीयते यद् भारतीय-दर्शनशास्त्रस्य मुख्यमुद्देश्यमस्ति क्लेशबहुलस्य संसारस्य सर्वविधानां दुःखानां च निवृत्ति पूर्वकं परमानन्दस्योपलब्धिः, तदर्थं साधनायावश्यकत्वात् तन्निर्धारणार्थमेव तत्त्वमीमांसाया उपयोगोऽस्ति।

विभिन्नेषु दर्शनेषु परस्परं प्रतीयमानो विरोधो न वास्तविकः। एतस्य समीचीना मीमांसाऽस्माकं पूर्वजैर्दार्शनिकैः कृताऽस्ति।

वस्तुतः शास्त्रस्य प्रयोजनं लोकसिद्धस्यार्थस्य व्युत्पादने नास्ति। यद् वस्तु आपारमरप्रसिद्धं तदर्थं शास्त्रीययुक्तीनां काऽऽवश्यकता? किन्तु लोकसिद्धस्य भेदस्य निराकरणं विधायाभेदस्य प्रतिपादनमेव शास्त्रस्य मुख्यमस्ति प्रयोजनम्।

शास्त्रं ह्यपूर्वमिव वस्तु निर्धारयति। यदि शास्त्रे लोकप्रसिद्धस्यैव वस्तुनो विवरणमुपलभ्यते तर्हि तदनुवादमात्रमस्ति। अत एवोक्तं षड्दर्शनटीकाकर्त्रा वाचस्पतिमिश्रेण भेदो लोकप्रसिद्धत्वादनूद्यते। अभेदस्तु तदपवादेन प्रतिपादनमर्हति।

ननु यद्यभेदस्यैव व्युत्पादनमेव शास्त्रस्य मुख्यं प्रयोजनं तर्हि भेदप्रतिपादकानां न्यायादीनां दर्शनानां का गतिः? इति चेत्-----

अत्रोच्यते "अधिकारिविभेदेन शास्त्राण्युक्तान्यशेषतः" इत्युक्तत्या अधिकारिभेदादेव विभिन्नानि शास्त्राणि प्रकृतानि, अन्यथा शास्त्रप्रवक्तॄणामृषीणां भ्रान्तत्वस्वीकारानवस्था प्रसज्जेत।

प्रस्थानभेदस्यान्ते स्वामिना श्रीमधुसूदनसरस्वतीपादेन आरम्भवादः, परिणामवादः, विवर्तवादश्चेति त्रयो वादा अभ्युपगताः। तत्रारम्भवादस्य दृष्टि र्न्यायवैशेषिक-मीमांसानाम्। अपरिणामवादः सांख्ययोगयोरभिमतः, विवर्तवादोऽद्वैत-वेदान्तिनां, बौद्धेषु विज्ञानवादिनो चाभीष्टः।

कार्यकारणयोः शृङ्खलायाः पर्यालोचने क्रियमाणे इमे त्रयो वादा मुख्यतया समुपतिष्ठमानाः क्रमशो विकासवादयोजनां प्रस्तुवन्ति।

आरम्भवाददृष्ट्या जगदिदं विभिन्नपरमाणुपुञ्जादुत्पद्यते। कारणे कार्यस्य सत्ता न पूर्वतः तिष्ठति उत्पत्तिरेका अपूर्वा घटनाऽस्ति। अनया दृष्ट्या तन्तुभ्यः पटोत्पत्तिः, एको नवीनः क्रमः, यतो हि तन्तुष न पटः पूर्वतः तिष्ठति, किन्तु तन्तुवायव्यापारद्वारा सोऽभिनवरूपेणोत्पद्यते।

परिणामवादानुसारं कार्यकारणयोः पार्थक्यं नास्ति। कार्यं व्यापारात् पूर्वमपि कारणे अव्यक्तरूपेण तिष्ठति। कार्यव्यापारद्वारा अव्यक्तं तत् कार्यं व्यक्तं क्रियते। अस्मिन् मते तन्तुषु पटः पूर्वत एव तिष्ठति, तनतुवायव्यापारेणाव्यक्तः स व्यक्तपटरूपेण आविर्भवति। कार्यं व्यक्तदशासूचकमस्ति कारणं चाव्यक्तदशाद्योतकम्।

विवर्तवादे कारणमेव एकमात्रं सद् अस्ति, कार्यकारणादभिव्यक्तं सदपि वास्तविकं नास्ति। एवं ब्रह्मैव एकमात्रं सत् तद् विवर्तं जगदिदमसदस्ति।

एवं दर्शनेषु भेदप्रतीतिकारणमस्ति दृष्टिभेदः। न्यायवैशेषिकमीमांसानां दृष्टिः प्रारम्भिका, ततोऽधिका विकासशीला दृष्टिः सांख्ययोगयोः, वेदान्तस्य दृष्टिस्तु भारतीयदार्शनिकैरन्तिमा अङ्गीकृताऽस्ति।

भारतीयदर्शनस्य प्रधानं लक्ष्यम् अद्वैततत्त्वमेवास्ति, परन्तु अद्वैततत्त्वमेतावत् सूक्ष्मं कुशलबुद्धिगम्यञ्चास्ति, यत्तस्य ग्रहणमेकवारं प्रतिपादनेन न भवितुमर्हति। अतः स्थूलविषयग्राहिणां मानवानामुपकारार्थं मुनिभिर्न्यायादीनां शास्त्राणां निर्माणं कृतम् , येन मनुष्यः सुगमतया क्रमशः स्थूलात् सूक्ष्मग्रहणपूर्वकमतिसूक्ष्माणां पदार्थानां ग्रहणं कर्तुं समर्थः स्यात्। अतो भारतीयं दर्शनमेकमेवाद्वैतं तत्त्वं बोधयितुं प्रवृतं तच्चास्ति। वेदान्तदर्शनं दर्शनान्तराणि च तत्राधिरोढुं सन्ति सोपानमात्राणि। अतएवाभिहितम्--- मधुसूदनसरस्वतीपादैः---

तर्हि ते मुनयोऽभ्रान्ताः सर्वज्ञत्वात्तेषाम् , किन्तु बर्हिर्विषयप्रवणानामापाततः परमपुरुषार्थे प्रवेशो न भवतीति नास्तिक्यनिवारणाय तैः प्रकारभेदाः प्रदर्शिताः। सर्वेषां प्रस्थानकर्तॄणां मुनीनां विवर्तवादे पर्यवसानेन, अद्वितीये परमेश्वरे एव वेदान्तप्रतिपाद्ये तात्पर्यम् , जगदिदं परमाणुपुञ्जमितिवादिन आरम्भवादस्य दृष्टिः स्थूलाऽस्ति। कारणे कार्यसत्तामभ्युपगच्छतः परिणामवादस्य दृष्टिस्ततोऽपि सूक्ष्माऽस्ति, परं विवर्तवादस्तु सर्वतः सूक्ष्मतमोऽस्ति। विवर्तवादानुसारं ब्रह्मैवैकं परमार्थभूतं तत्त्वमस्ति। दृश्यमानमिदं प्रपञ्चजातमस्यैवास्ति अतात्त्विको विकारः। न्यायदर्शनस्य मुख्यमुद्देश्यं हि कुतार्किकानां मतखण्डनाय युक्तिबहुलानां प्रमाणानां प्रकृष्टा मीमांसा। अत एवोक्तं केनचित् प्राचीनेन न्यायचार्येण यथान्नस्य रक्षार्थं क्षेत्रस्य चतुर्दिक्षुकाण्डमयीवृत्तिरवरुध्यते, तथैवाद्वैतप्रतिपादकोपनिषद् ज्ञानस्य

तर्ककुशलानां बौद्धानां कुतर्कतो रक्षायै न्यायरूपा वृत्तिः समायोजिता। वास्तवं तत्त्वं तु वेदान्तदर्शनादेवावगन्तव्यम्। अत एव 'इत तु कण्टकावरणं तत्त्वं तु वादरायणात्'।

वस्तुतो दर्शनानां प्रयोजनानभिज्ञतया एव तत्राक्षेपस्यावसर उपतिष्ठते। यद्यप्यात्मनो विषयमधिकृत्य दर्शनानां विवेचने पार्थक्यं प्रतीयते, परन्तु प्रयोजनानां भिन्नतया तत्र नास्ति वास्तविको विरोधः। न्यायदर्शनस्य प्रयोजनं प्राणदेहेन्द्रियादिभ्य आत्मनो भिन्नत्वसाधनमेव। तदवश्यमीन्द्रियार्थ सन्निकर्षे सत्यात्मानं ज्ञानसुखादि-गुणानामाश्रयं मन्यते, परमियं गुणाश्रयिता लोकसिद्धवस्तुनोऽनुवादमात्रमस्ति। सांख्यादय आत्मनोऽसङ्गत्व-निर्लेपत्व-निर्गुणत्व-चेतनत्त्वमेव प्रतिपादयन्ति। पुरुषस्य बहुत्व-भोक्तृत्वादि च लोकसिद्धवस्तुनोऽनुवादमात्रमस्ति। अतो विरुद्धांशं परिहायवशिष्ट-स्यांशस्य ग्रहणं नितान्तं न्यायसंगतं वर्तते।

अनयैव दृष्ट्या न्यायवैशेषिकाभ्यां हि सुखदुःख्याद्यनुवादतो देहादिमात्र-विवेकेनात्मा प्रथमभूमिकायामनुमापितः 'एकदा परे सूक्ष्मे प्रवेशासंभवात्', इति वदा विज्ञानभिक्षुणाऽपि दर्शनानां समन्वयो दर्शितः।

सांख्ययोगाचार्यो विज्ञानभिक्षुः भारतीयदार्शनिके जगति समन्वयदृष्ट्या प्रसिद्धो दार्शनिकः, यतो हि तन्मते विभिन्नानां दर्शनानां सिद्धान्तेषु आपाततो विरोधे प्रतीयमानेऽपि परमार्थत ऐक्यमेवास्ति। इतोऽपि पूर्ववर्तिनोदयनाचार्येण दर्शनेषु भासमानस्य विरोधस्य परिहारं कृत्वा तेषां समन्वये दृष्टिः प्रक्षिप्ता। आत्मतत्त्वविवेके तेनान्यानि दर्शनानि मोक्षनगर्या अपद्वाराण्युक्तानि, वेदान्तदर्शनञ्च पुरद्वारं स्वीकृतम्। तथा स्पष्टमादिष्टं यद् अतोऽभ्यासकामैः पुरुषैः अपद्वाराणि परिहाय पुरद्वारेणैव प्रवेष्टव्यम्। तस्मादभ्यासकामोऽप्यपद्वाराणि विहाय पुरद्वारं प्रविशेत्। एवमेव न्यायकुसुमाञ्जलोवपि तेन समन्वयस्य निर्देशः कृतोऽस्ति----

**इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो ।**
**मूलत्वात् प्रकृतिः प्रबोधमयतो विद्येति यस्योदिता ।।**

इदमस्य रहस्यम्--- ईश्वरोऽदृष्टसाहाय्येन विश्वं सृजति। अतोऽदृष्टस्यैव नामान्तरं सहकारशक्तिः। दुर्जेयत्वादिदमदृष्टं माया, जगन्मूलकत्वात्प्रकृतिः, तत्त्वज्ञानोदयेन नश्यत्वादविद्या च प्रोच्यते। अतो विश्वस्य सृष्टिविषये मूलं तत्त्वमेकमेवास्ति, केवलं विभिन्नानां नाम्नां प्रयोगेण तत्पृथक् पृथक् प्रतीयते। एवञ्च नेयायिकानां निकाये दृष्टम् , तान्त्रिकाणां नये शक्तिः, वेदान्तिनां मते माया, अविद्या च, तथा सांख्यानां सिद्धान्ते प्रकृतिः एकस्यैव मूलतत्त्वस्य विभिन्नं संज्ञा मात्रमस्ति। एवमेतानि त्रीणि प्रस्थानानि सोपानानीव सूक्ष्मात्सूक्ष्मतमता-

मुपगच्छन्ति मूलेऽद्वैततत्व एवाग्रसरी भवन्ति।

प्रत्येकानुभवव्यापारे शब्दद्वयमवतिष्ठते, एको द्रष्टा, द्वितीयश्च दृश्यम्। न्यायवैशेषिककल्पनानुसारम् आत्मास्ति द्रष्टा, पृथिव्यप्तेजोवाय्वाकाशात्मकं भूतपञ्चकं च दृश्यम्। द्रष्टृद्वारा दृश्यस्यानुभूतये मनसः कल्पना कृताऽस्ति। ज्येष्ठकनिष्ठादिलोक-व्यवहारनिर्वाहाय कालः, पूर्वापरादिव्यवहाराय च दिशश्च स्वतन्त्राः पदार्था अङ्गीकृताः सन्ति। एवञ्च द्रष्टृदृश्यरूपेण विभक्तस्य जगतो यथार्थविश्लेषणाय न्यायवैशेषिकाभ्यां क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिमनसामिति नवानां पदार्थानां पृथक्-पृथक् सत्ता स्वीकर्तव्या भवति। अतः प्रथमप्रस्थानस्याध्यात्मिकी दृष्टिः बहुत्ववादस्यास्ति। द्वितीये प्रस्थाने स्वतन्त्रान् पदार्थान् प्रविहाय केवलौ द्वावेव पदार्थौ स्वीकृतौ स्तः। एका प्रकृतिर्द्वितीयश्च पुरुषः। तत्र पुरुषो द्रष्टृरूपे प्रकृतिश्च दृश्यरूपेणाङ्गीकृतास्ति। न्यायस्यात्मा सांख्ये पुरुषः प्रोच्यते, परन्तूभयत्रास्ति महान् मतभेदः। आत्मा जडचैतन्यज्ञानादीनां। गुणानामधिष्ठानमात्रम् , परन्तु पुरुषो न 'चैतन्याश्रयः' अपि तु स्वयं चित्स्वरूपोऽस्ति। मनोऽन्तःकरणे क्षित्यप्तेजोमरुतां परमाणवः आकाशश्च पञ्चतन्मात्रासु स्वीक्रियन्ते। दिक्कालौ न सांख्यमते पृथक् पदार्थौ स्तः। व्यासभाष्ये कालो वस्तुशून्यः, विकल्पमात्रः साधितोऽस्ति-- स खल्वयं कालो वस्तुशून्योऽपि बुद्धिनिर्माणः शब्दज्ञानानुपाती लौकिकानां व्युत्थितदर्शनानां वस्तुस्वरूप इवावभासते। व्रणानां सन्तानस्य व्यावहारिकं नामास्ति कालः। विभिन्नैः पदार्थैः सहाकाशस्य

सम्बन्धे सति देशस्य कल्पनाऽस्ति व्यावहारिकी, न तु पारमार्थिकी। एवं प्रथमप्रस्थानस्य नवानां पदार्थानां स्थाने द्वितीयप्रस्थाने प्रकृतिपुरुषाविमावेव द्वौ स्वतन्त्रौ नित्यौ पदार्थौ अङ्गीकृतौ, प्रथमप्रस्थानीयबहुत्ववादस्य स्थाने द्वितीयप्रस्थाने द्वैतवादस्य प्रतिष्ठा जाता। तृतीये प्रस्थाने पूर्णस्याद्वैतवादस्य स्थापना अभवत्। सांख्यस्य प्रकृतिः मायारूपेण पुरुषश्च ब्रह्मरूपेण गृहीतौ। परमेकमत्र वैशिष्ट्य दृश्यते-- अत्र माया ब्रह्मणः शक्तिः स्वीकृता। अतो ब्रह्मैव विश्वस्याभिन्ननिमित्तोपादानकारणमेकम-द्वैततत्त्वं स्वीकृतम्। अद्वैतमते ब्रह्मैव सत्यमस्ति जगदिदं अनिर्वचनीयाया मायाया कल्पना मात्रमस्ति।

शाक्तदर्शने तु अद्वैतकल्पना इतोऽपि विलक्षणाऽस्ति। तत्र सांख्यपुरुषस्य स्थानं शिवेन गृह्यते, प्रकृतेः स्थानं च शक्तया गृहीतम्। तत्र पुरुषस्य बहुत्वस्थाने शिवस्यैकत्वं कल्पितं जडात्मिकयाः प्रकृतेश्च स्थाने चिद्रूपिणी स्वीक्रियते। एवं शिव-शक्तयात्मकस्य एकस्यैव तत्त्वस्य तत्र स्थित्यात्मकं क्रियात्मकं च द्विविधं रूपं स्वीक्रियते। स्थित्यात्मको भावः शिवोऽस्ति, क्रियात्मको भावश्च शक्तिः।

आर्यावर्तस्य तपोनिष्ठैर्महर्षिभिरस्य विश्वस्य रहस्यमवगन्तुं ये विचारा अभिव्यक्तास्ते सन्ति भारतीयदर्शनस्य सर्वस्वम्। अनेकात्मकं जगदिदं प्रतिक्षणं विलक्षणमनुभूयमानानां पदार्थानां पुञ्जमस्ति।

अत्रैकत्वानुभूतिरेव वास्तविकं लक्ष्यमस्ति। अनेकतायामेकत्वोपलब्धिरेव भारतीयदर्शनानां मुख्यमस्ति प्रयोजनम्। यथा परिवर्तनशीलेऽस्मिन् ब्रह्माण्डे एकस्यापरिवर्तनशीलस्य तत्त्वस्य सद्भावो विद्यते तथैव प्रतिपिण्डमपि एकस्यापरिवर्तन-शीलस्य तत्त्वस्य सत्ता वर्तते। ब्रह्माण्डस्य नियामिकायाः सत्ताया नामास्ति ब्रह्म तथा पिण्डस्य नियामिकायाः सत्ताया नामास्ति आत्मा। अनयोर्ब्रह्मात्मनोरेकत्वं सर्वतोभावेन मननीयमस्ति। यद्यपि सामान्यदृष्ट्या ब्रह्म सर्वथा अलभ्यमस्ति तथापि स्वेषु स्वेषु हृदयेषु अन्तर्यामित्या स्थिततस्यात्मनोऽनुभवं सर्वे कुर्वन्त्येव। अतोऽब्रह्म-साक्षात्कारस्य सर्वतो महानुपाय आत्मनः साक्षात्कार एवास्ति।

अस्मिन् वैरञ्चे प्रपञ्चे सर्वेभ्यः पदार्थेभ्यः प्रियतमं वस्त्वात्मैवास्ति। बृहदारण्यकोपनिषदि महर्षिणा याज्ञवल्क्येनात्मनः साक्षात्कारो मोक्ष उक्तः। कोऽपि जागतिकः पदार्थो नित्यो नास्ति। अथाद्यानुभूयमानः श्वो नष्टा। यदि कश्चित्स्थायी अनश्वरः पदार्थोऽस्ति तर्हि स आत्मैवास्ति। अस्य साक्षात्कार एव मानवजीवनस्यान्तिमं लक्ष्यमस्ति। अतस्यानुभवनिमित्तं पुत्रवत्सला जननीव सकललोककल्याणकारिणी भगवती श्रुतिः समुपदिशति--- 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च'।

यत आत्मतत्त्वस्य विज्ञानेन सर्वं विज्ञातं भवति, अत आत्मन एव 'श्रवणमननिदिध्यासनानि' कर्तव्यानि। तत्र वेदवाक्येभ्य आत्मतत्त्वस्य श्रवणं कर्तव्यम् , तर्कयुक्तिनो मननं विधेयम् , योगप्रतिपादितैस्तैः तैरुपायैर्निदिध्यासन-मनुष्ठेय्। इमे त्रय एवात्मदर्शनस्य सन्ति उपायाः। तथा चोक्तमभियुक्तैः---

**श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।**
**मत्त्वा च सततं ध्येयं एते दर्शनहेतवः ।।**

आत्मनो वास्तविकस्य स्वरूपस्य ज्ञानमस्माभिः तेभ्य एव ग्रन्थेभ्यो विधेयं यत्रात्मनिष्ठैः ब्रह्मविद्भिर्महर्षिभिः साक्षात् कृतस्यानुभवस्य सङ्कलनमस्ति। तानि सन्ति अस्माकं दर्शनान्येव। न केवलेन श्रवणेन कर्तव्यस्य समाप्तिर्भवति, किन्तु मननस्याप्यावश्यकता भवति। युक्तिभिर्वेदविहितानां तथ्यानां स्वरूपस्य सम्यग्ज्ञानं मननम् तस्य निश्चिततत्त्वस्य योगमार्गेण चिन्तनं निदिध्या-सनमप्यावश्यकमस्ति। एभिरुपायैरवश्यमात्मनो दर्शनं जायते। मोक्षोपलब्धय आत्मदर्शनातिरिक्तो नान्योऽस्ति कश्चन मार्गः। अत एवोक्तं श्रुतौ--- 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय'। मानवजीवने येन एतत्तत्त्वमवगतं तस्य जन्मसफलमस्ति, अन्यथाऽनर्थगर्तपतनमेव तस्य भवति--- 'इह चेदवेदीदथ सत्यमस्ति नोचेदवेदीन्महती विनष्टिः'। आत्मदर्शनं कृत्वा कृतकृत्या भवन्ति मानवाः। तदर्थमन्यत्कृत्यं नावशिष्यते। तथा चोक्तं गीतायाम्----

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।

यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ।।

दर्शनशास्त्रद्वारा सुचिन्तितानामाध्यात्मिकतथ्यानामुपरि एव भारतीय-धर्मस्यास्ति प्रतिष्ठा। दर्शनं विचाराणां प्रतिपादनमस्ति तथा तदनुसारमाचारस्य व्यवस्था धर्मस्य कार्यमस्ति। यदि दर्शनं सिद्धान्तप्रतिपादकं तर्हि धर्मोऽस्ति व्यवहारप्रदर्शकः। धार्मिकाचारं विना कार्यान्वितस्य दर्शनस्य स्थितिर्निष्फला तथा दार्शनिकविचारपरिपुष्टिमन्तरा धर्मस्य सत्ताऽप्रतिष्ठिता भवति। अतो धर्मः स्वप्रतिष्ठायै दर्शनमपेक्षते। कश्चिदपि धर्मो न तावद् विदुषां प्रियो भवति यावत्स दर्शनाधारे न तिष्ठेत्। धर्मस्य सहयोगेन भारतीयदर्शनस्य व्यापिका व्यावहारिका च दृष्टिर्विद्यते। तथा दर्शनस्याधारशिलायां प्रतिष्ठितत्त्वाद् भारतीयो धर्म आध्यात्मिकतयाऽनु-प्राणितोऽस्ति। दुःखनिवृत्तेरन्वेषणाद् धर्म उत्पद्यते तथा दुःखस्यात्यन्तिकनिवृत्तये एकमात्रमुपायो दर्शनशास्त्रमस्ति। सांख्यदर्शनस्याविर्भाव एतदर्थमिव जातं यत्तत् त्रितापैः तप्तानां जनानां शान्तये क्लेशबहुलात् संसाराद् निवृत्तिलब्धये निश्चितमार्ग-स्योपदेशं ददाति। एवं परमात्मदर्शनमेव सर्वोन्नतं दर्शनमस्ति। आत्मदर्शनं यथां दर्शनस्य चरमं लक्ष्यमस्ति तथैव धर्मोऽप्यस्तिं मनु-याज्ञवल्क्यौ आत्मदर्शनमेव परमं धर्मं स्वीकुरुतः। अस्मिन् पुण्यभूमौ भारते गङ्गायमुनयोः सम्मेलनमिव परमं धर्मं स्वीकुरुतः। अस्मिन् पुण्यभूमौ भारते गङ्गायमुनयोः सम्मेलनमिव धर्मदर्शनयोर्मधुरं मिलनं भारतीयसंस्कृतेः परमसामञ्जस्यस्य सूचकमस्ति। केवलेन तर्केण पदार्थस्य

सम्यक् निर्णयो भवितुं नार्हति। अतः श्रुतेराश्रयः सदा आदरणीयः। दार्शनिकशिरोमणिना योगिराजेन भर्तृहरिणा वाक्यपदीयेऽस्य तत्त्वस्य सम्यग्विवेचनं कृतमस्ति।

अद्वैतं तत्त्वमेव वस्तुतः सदस्ति। वर्तमानं विज्ञानमपि तदेव लक्ष्यीकरोति। यथा समुद्रे एव सर्वा नद्यो मिलन्ति तथैव समस्ता दार्शनिकदृष्टयोऽपि परमेश्वरे एव पर्यवस्यन्ति, किन्तु पृथक् पृथक् प्रवृत्तासु नदीषु समुद्र इव न तासु स दृष्टिगोचरी भवति। तथा चोक्तं सिद्धसेनादिवाकरेण----

**उदधाविव सर्वसिन्धवः समुदीर्णास्त्वयि नाथ दृष्टयः ।**
**न च तासु भवान् प्रदृश्यते प्रविभक्तासु सरिदिवोदधिः ।।**

भारतीयैर्दार्शनिकैर्न केवलं वैदिकदर्शनानामपि तु अवैदिकदर्शनानामपि रहस्यं सम्यग् ज्ञात्वा उभयत्र समन्वयं समुपस्थापयितुं महान् प्रयासो विहितः, यस्य सङ्केतो निम्ननिर्दिष्टपद्ये स्पष्टमुपलभ्यते----

**श्रोतव्यः सौगतो धर्मः कर्तव्यः पुनरार्हतः ।**
**वैदिको व्यवहर्तव्यो ध्यातव्यः परमः शिवः ।।**

एवं जैनबौद्धदर्शनानामास्तिकैः षड्दर्शनैः सह मञ्जुलं स्पृहणीयञ्च सामञ्जस्यं प्रदर्शयितुं दार्शनिकतत्त्वानामिदं पञ्चामृतं कस्य सहृदयहृदय हृदयाह्लादकं न भवति।

भारतीयं दर्शनमेकं विशालं भवनमिवास्ते, यस्य विभिन्नेषु भागेषु सन्ति अवान्तर प्रस्थानानि। यथा अनेकखण्डस्य भवनस्य प्रत्येकं खण्डं स्वतन्त्रं भवति तथैव सार्वभौमस्य अद्वैतदर्शनस्य विभिन्ननि प्रस्थानानि स्वतन्त्राणि सन्ति। यद्दर्शनं दार्शनिकविकासस्य यस्मिन् सोपाने तिष्ठति तत्र तत्पूर्णमेवास्ति। अत एवोक्तं पुष्पदन्ताचार्येण महिम्नः स्तोत्रे----

**प्रभिन्ने प्रस्थाने ऋजुकुटिलनानापथजुषां ।**
**नृणामेको गम्यस्त्वमसि पयसामर्णव इव ।।**

भारतीयदर्शनेषु समन्वयस्य भावना अतिस्पृहणीयाऽस्ति। समन्वयप्रवृत्तिः भारतीयसंस्कृतेरेका विशिष्टा विशेषता विद्यते। वास्तविकः समन्वयो मानवजीवनस्य प्रक्रियाऽस्ति, यस्या विभिन्नेषु क्षेत्रेषु महती उपयोगिता भवति। मानवीयं मनो बुद्धिश्च विरोधस्य स्थितौ न कार्यं कुरुतः, किन्तु ते विरोधिनामनुभवानां विचाराणाञ्च मध्ये सामञ्जस्यं स्थापयितुं प्रयतेते। सामञ्जस्यस्याभिलाषैव समन्वयस्य प्रवृत्तिमुत्पादयति।

भारतीयैर्दार्शनिकै दर्शनस्याध्यात्मिकसाधनायाश्च क्षेत्रेषु महत्त्वपूर्णः समन्वयो विहितः। भारतीये दर्शने समन्वयस्य सम्बन्धः मानवजीवनस्य चरमेण लक्ष्येण मोक्षेण तदुन्मुख्या साधनया च सह वर्तते। सामान्यतया प्रतीयते यद् भारतीयविभिन्न-

दर्शनानां मानवजीवनस्य चरमं लक्ष्यं मोक्षस्य च धारणा पृथक् पृथक् वर्तते। बुद्धस्य निर्वाणं, न्यायस्यापवर्गः, सांख्ययोगयोः कैवल्यं, वेदान्तस्य च ब्रह्मभावो नैकतत्त्वमस्ति, किन्तु आसु विभिन्नतासु एकमैक्यमस्ति। मोक्षस्यार्थोऽस्ति जन्ममरण-चक्राद्विमुक्तिः। अनया दृष्ट्या सर्वाणि दर्शनानि एकमतानि सन्ति, न कस्यापि क्वचिदस्ति विमतिः। यतः साधनाक्षेत्रेष्वनेकेषां मार्गाणा प्रतिपादने सत्यपि मौलिकी एकता सर्वत्रैवानुस्यूताऽस्ति। अस्या एकताया मूलाधारोऽस्ति मोक्षमार्गिणां जिज्ञासूनां साधकानाञ्च सांसारिकभोगैश्वर्यं प्रति विरक्तिरेव।

आश्रयव्यवस्थारूपेण भारतीयैश्चिन्तकैः ऐहिक-पारलौकिकजीवनलक्ष्यो-न्मुखानां प्रयत्नानामपि समन्वयो विहितः। लौकिकं जीवनं प्रति दार्शनिकानामुपेक्षा-दृष्ट्या भारतीयविचारका नैतिक-सामाजिक-राजनीतिकसमस्याः प्रति उदासीनाः तिष्ठन्ति, परं विदेशेषु नीतिदर्शनसमाजदर्शन राजनीतिदर्शनानामपि इतिहासाः सन्ति। तत्रत्यैर्दार्शनिकैः एतत्क्षेत्रसम्बद्धसमस्यासु अपि गभीरतया चिन्तनं कृतम्, किन्तु न केनचिद् भारतीयेन दार्शनिकेन सामाजिकन्यायान्यायसम्बन्धे गभीरतया विचारः कृतः।

भारतीया दार्शनिका मुख्यतो मोक्षे तत्साधनायाञ्च यादृशीं रुचिं दर्शयन्ति न मानवानां लौकिकजीवनाय तादृशं महत्त्वं ददति, किन्तु महाभारतस्य शान्तिपर्वणि

मोक्षधर्मे युधिष्ठिरं गीतायाञ्चार्जुनं प्रति प्रवृत्तिमूलकस्य जीवनस्य महत्त्वं बोधयितुं महान् प्रयत्नः कृतोऽस्ति।

अद्यत्वे पृच्छाशीला नरा नार्यश्च ईश्वर-पुनर्जन्म-परलोक-मोक्षादीनां न तादृशीं मान्यतामङ्गीकर्तमुद्यताः सन्ति। परिवर्तनं प्रगतिश्चैतिहासिकजीवनस्यात्यावश्यक-मस्ति। अतस्तेषां दृष्टौ दार्शनिकदृष्टेरपि परिवर्तनमत्यावश्यकम्। जीवनस्य सम्बन्धेऽपि नीवनं चिनतनं कार्यं लौकिकाध्यात्मिकलक्ष्यसम्बन्धेऽप्येकस्मै अभिनवाय समन्वयाय प्रयत्नो विधेयः।

अद्यत्वे साधनसौविध्याद् विश्वस्य समस्ता विचारधारा सर्वसमक्षमुपस्थि-ताऽस्ति। समन्वयस्याधारो न केवलं भारतयचिन्तरसरण्यो भवितुमर्हन्ति, किन्तु अद्यतनीयाः चिन्तका विचारधारा आधारीकृत्येवाभिनवस्य समन्वयस्य प्रयासं कर्तु शक्नुवन्ति।

सामयिकाः सभ्या न केवलं प्राचीनविचारधारणां समन्वयमात्रं कुर्वन्ति, तेऽभिनवानामन्वेषाणानां, नूतनानां विचाराणां च समादरमपि कुर्वन्ति। योरोपीया विचारका विभिन्नविज्ञानानां दर्शनानां च क्षेत्रेष्वपि चिन्तनमत्यावश्यकं मन्यन्ते।

एवंविधमन्वेषणं चिन्तनं वा न प्राचीनान् मनीषिणः प्रति अश्रद्धाद्योतकः। अभिनवविचारस्यार्थो न प्राचीनविचाराणामुपेक्षाऽस्ति, किन्तु तैर्विचारैः सह कयाचिद् दृष्ट्या अपूर्णतायाः पूर्णता क्रियते। यदि साम्प्रतिकाः केचन चिन्तकाः कियतां प्राचीनानां विचाराणां खण्डनं कुर्युः, तर्हि तन्नास्ति अश्रद्धाद्योतकम्। खण्डनं तु तेषामेव मन्तव्यानां क्रियते, ये महत्त्वपूर्णा भवन्ति। श्रीशङ्कराचार्येणापि स्वीये ब्रह्मसूत्रभाष्ये समकालीनानां दर्शनानां खण्डनं कृतम्। तदुत्तरकालिकैः नैकैः दार्शनिकैरपि शङ्कराचार्यस्यापि खण्डनं कृतम्। एवं खण्डन-मण्डनपद्धत्या महान् विकासो जायते।

भारतीयैर्विचारकै आदर्शजीवनस्य चरमलक्ष्यमोक्षविषये तर्कसंगताभिः-र्विविधाभिर्युक्तिभि महत्त्वपूर्णं सुव्यवस्थितं चिन्तनं कृत्वा समेषां दर्शनानां सम्यक् समन्वयोऽपि विहितो येन समस्तानि दर्शनानि समादरभाजनतां गतानि सर्वोत्कृष्टतां भजन्ते।

# *उपसंहारः*

आध्यात्मिके जगति भारतीयदर्शनानां स्थानं सर्वोत्कृष्टं विद्यते। एषां प्रमुखं लक्ष्यं तस्य सर्वोच्चसुखस्य प्राप्तेरुपायप्रदर्शनं वर्तते यद् विविधदुःखानां निवारणे नूनं समर्थं स्यात्। वस्तुतो भारतीयदर्शनेषु एका आध्यात्मिकी प्रवृत्तिरेवैतादृशी विद्यते, यया साधको न कदापि निराशो भवति, प्रत्युत तत्र सम्यगनुशीलनेनोत्त-रोत्तरमाशायाः सञ्चारो बोभवीत्येव निरन्तरम्। अत एव समये समये समाजस्य विचारकैरात्मचिन्तनाधारेण सुखदुःखयोः कारणानामन्वेषणं कृत्वा स्व स्वो विचारः प्रस्तुतः, तथा पृथक् पृथक् सिद्धान्तानामाधारेण विभिन्नानि दर्शनानि प्रादुर्भूतानि। दर्शनशब्दो हि दृशिर् प्रेक्षणे इति धातोः करणे ल्युट्प्रत्ययेन निष्पद्यते, यस्य साधारणोऽर्थो भवति यद् यद्द्वारा दृश्यते--- "दृश्यते अनेनेति दर्शनम्" दर्शनस्य साधनमस्ति चक्षुरिन्द्रियम्। अतश्चक्षुरिन्द्रियद्वारा दर्शनमेव दर्शनपदवाच्यं स्यात् , परमयमर्थोऽत्र नाभिप्रेतः, किन्तु ज्ञानदृष्टिद्वारा दर्शनमेव दर्शनशब्दस्य वास्तविकोऽर्थः। अतो दर्शनस्य परिभाषा एवं विधा क्रियते यद् यत् शास्त्रमैहिकस्य पारलौकिकस्य च सुखस्य साधकं मार्गं प्रदर्शयति तदेव शास्त्रमस्ति दर्शनपदाभिधेयम्।

प्रथमोऽध्याये सांख्योगदर्शनस्य परिचयः, दर्शनपदनिर्वचनम् दर्शनभेदश्च, आस्तिकदर्शनानामाविर्भावक्रमस्य दिग्दर्शनम् , सांख्यशब्दार्थ विमर्शः, योगदर्शनविकासक्रमः विवेचनं जातम्।

द्वितीयोऽध्याये सांख्ययोगदर्शनयोः साम्यम् , सांख्ययोगयोर्वैशिष्ट्यम् , सांख्ययोगदर्शनस्योपयोगिता, सांख्ययोगदर्शनस्यावश्यकता, सांख्ययोगदर्शन मीमांसा विवेचनं जातम्।

तृतीयोऽध्याये पुराणस्य परिचयः, पुराणेषु सांख्यदर्शनप्रभावः, पुराणेषु योगदर्शनप्रभावः, पुराणमाध्यमेन दर्शननान्तरेषु प्रभावः विवेचनं जातम्।

चतुर्थोऽध्याये पुराणेषु सांख्ययोगतत्त्वविकासक्रमः, पौराणिकसृष्टिविमर्शः, प्रकृतिपुरुषयोः सम्बन्धः, पुराणेषु योगभेदचर्चा, योगसिद्धिविमर्शः विवेचनं जातम्।

पञ्चमोऽध्याये पुराणेषु सांख्ययोगदर्शन विवेचनम् , द्वैताद्वैतसिद्धान्तभेदः, दर्शनान्तरेषु परस्परं समन्वयः विवेचनं जातम्।

..............................

# **अधीतग्रन्थानां सूची**

| ग्रन्थनाम | लेखकः |
| --- | --- |
| १- स्कन्दपुराण | भगवान् व्यासः |
| २- स्कन्दपुराणस्य काशीखण्डः | भगवान् व्यासः |
| ३- शिवमहापुराणम् | भगवान् व्यासः |
| ४- वामनपुराणम् | भगवान् व्यासः |
| ५- मत्स्यपुराणम् | भगवान् व्यासः |
| ६- श्रीमद्भागवतम् | भगवान् व्यासः |
| ७- श्रीमद्देवीभागवतम् | भगवान् व्यासः |
| ८- ब्रह्मपुराणम् | भगवान् व्यासः |
| ९- नारदपुराणम् | भगवान् व्यासः |
| १०- मार्कण्डेयपुराणम् | भगवान् व्यासः |
| ११- ब्रह्मवैवर्तपुराणम् | भगवान् व्यासः |
| १२- भविष्यपुराणम् | भगवान् व्यासः |
| १३- विष्णुपुराणम् | भगवान् व्यासः |

| | | |
|---|---|---|
| १४- | काशी का इतिहास | डॉ०मोतीचन्द्रः |
| १५- | धर्मशास्त्र का इतिहास | पी०वी०काणे |
| १६- | छान्दोग्योपनिषद् | आर्श |
| १७- | महाभारतम् | भगवान् व्यासः |
| १८- | पुराण विमर्शाख्यम् | आचार्य बलदेवोपाध्यायः |
| १९- | कूर्मपुराणम् | भगवान् व्यासः |
| २०- | लिङ्गपुराणम् पूर्वार्द्धम् | भगवान् व्यासः |
| २१- | पद्मपुराणम् | भगवान् व्यासः |
| २२- | संस्कृतसाहित्येतिहासः | विष्णुशर्मादहालः |
| २३- | संस्कृतसाहित्य का इतिहास | आचार्य बलदेवोपाध्यायः |
| २४- | पुराणयर्यालोचनम् | आचार्य बलदेवोपाध्यायः |
| २५- | डब्लू हाफ किन्स इण्डिया ओल्ड एण्ड न्यू | |
| २६- | ए०ए०मैकडोनल-इण्डिया पास्ट | मैकडोनल |
| २७- | अलवेरुना का भारत भाग-२ | मैकडोनल |
| २८- | मैकडोनल एण्ड कीथ वैदिक इन्डेक्स | मैकडोनल |
| २९- | अमकोशः | अमरसिंहः |
| ३०- | औचित्यविचार चर्चा | क्षेमेन्द्रः |

| | | |
|---|---|---|
| ३१- | अग्निपुराणम् | आर्शः |
| ३२- | कालिदासग्रन्थावली | महाकविकालिदासः |
| ३३- | किरातार्जुनीयम् | महाकविभारविः |
| ३४- | व्याकरणमहाभाष्य | पतञ्जलिः |
| ३५- | वाक्यपदीयम् | भतृहरिः |
| ३६- | शब्दकल्पद्रुम अ०भा० | राधाराधाकान्तदेवः |
| ३७- | शब्दकल्पद्रुम च०भा० | राधाराधाकान्तदेवः |
| ३८- | शब्दकल्पद्रुम प०भा० | राधाराधाकान्तदेवः |
| ३९- | संस्कृतसाहित्य कोशः | राजवंश हीरा |
| ४०- | संस्कृतसाहित्यविमर्शः | पं०द्विजेन्द्रनाथशास्त्री |
| ४१- | अद्वैतवेदान्तः इतिहास सिद्धान्तः | प्रो०राममूर्ति शर्मा |
| ४२- | अद्वैतसिद्धिः | श्री मधुसूदन |
| ४३- | अद्वैतवादः | गंगाप्रसाद |
| ४४- | अर्थवशीर्षोपनिषद् | गीताप्रेस गोरखपुर |
| ४५- | आत्मतत्त्वविवेकः | उदयन |
| ५६- | उपनिषद दर्शन का रचनात्मक सर्वेक्षण | रामचन्द्रदत्तात्रेय |
| ५७- | उपनिषदों का अध्ययन | विनोबा |

| | | |
|---|---|---|
| ४८- | कैवल्योपनिषद् (टीका) | सदाशिववेदालंकारः |
| ४९- | खण्डनखण्डखाद्य | लक्ष्मणशास्त्री |
| ५०- | दर्शनविन्दु संग्रह भाग-१,२ | सं०सं०वि०वि०वाराणसी |
| ५१- | न्यायभाष्यम् | वात्स्यायन |
| ५२- | निरुक्तम् | पुणे द्वारा प्रकाशित |
| ५३- | नैष्कर्म्यसिद्धिः | सुरेश्वराचार्यः |
| ५४- | पञ्चदशी | श्री विद्यारण्य मुनि |
| ५५- | ब्रह्मसूत्रम् | निर्णयसागर प्रेस मुम्बई |
| ५६- | बौद्धधर्म दर्शन | आचार्य नरेन्द्रदेव |
| ५७- | भक्तिचन्द्रिका | आचार्य बलदेवोपाध्यायः |
| ५८- | भक्तिरसार्णव | स्वामी करपात्री जी |
| ५९- | भारतीयदर्शन | आचार्य बलदेवापाध्यायः |
| ६०- | भारतीयदर्शन की चिन्तनधारा | प्रो०राममूर्ति शर्मा |
| ६१- | भारतीयदर्शनशास्त्र | डा०देवराज |
| ६२- | भक्तिसर्वस्व | स्वा०अखण्डानन्दसरस्वती |
| ६३- | योगदर्शन व्यासभाष्य सहितम् | पतञ्जलिः |
| ६४- | वैखानसागमः | |

| | | |
|---|---|---|
| ६५- | सर्वदर्शनसंग्रहः | माध्वाचार्यः |
| ६६- | सौन्दर्यलहरी | शंकराचार्यः |
| ६७- | श्रीमद्भगवद्गीता | भगवान् व्यासः |
| ६८- | श्रीभाष्यम् | रामानुजाचार्यः |
| ६९- | तन्त्रालोकः | जयरथः |
| ७०- | उपनिषद् साधनाखण गायत्रीरहस्यो-पनिषद् | आर्श/श्रीरामशर्माआचार्य |
| ७१- | गरुड़ पुराणम् | व्यासः |
| ७२- | देवीपुराणम् | व्यासः |
| ७३- | योगचूडामण्युपनिषद् | आर्श |
| ७४- | श्वेताश्वतरो पनिषद् | आर्श |
| ७५- | ऋग्वेदः | |
| ७६- | महोपनिषद | आर्श |
| ७७- | स्तुतिकुसुमाञ्जलिः | |
| ७८- | शिवमहिम्नस्तोत्रम् | शकराचार्यः |
| ७९- | सिद्धान्तकौमुदी | भट्टोजीदीक्षितः |
| ८०- | अभिज्ञान शाकुन्तलम् | महाकविकालिदासः |
| ८१- | कुमारसम्भवम् | महाकविकालिदासः |

| | | |
|---|---|---|
| ८२- | तुलसीरामचरितमानस | गोस्वामीतुलसीदासः |
| ८३- | काशी माहात्म्यम् | स्वा०शिवानन्द सरस्वती |
| ८४- | काशी रहस्यम् | |
| ८५- | अर्थरत्नावली (नित्याषोडाशिकार्ण-वरयटीका) | सं०सं०वि०वि०द्वारा प्रकशित |
| ८६- | कामधेनुतन्त्रम् (तन्त्रसंग्रह) | म०म०गोपीनाथ कविराज |
| ८७- | काश्मीर शैव दर्शन मूलसिद्धान्त | कैलाशपति मिश्र |
| ८८- | कुलार्णवतन्त्रम् | कृष्णदास अकादमी वाराणसी |
| ८९- | घेरण्ड संहिता | घेरण्डः |
| ९०- | तन्त्र और आगमशास्त्र का दिग्दर्शन | म०म०गोपीनाथ कविराज |
| ९१- | तन्त्रसारः | अनिनव गुप्तः |
| ९२- | तन्त्र सिद्धान्त और साधना | देवदत्तशास्त्री |
| ९३- | तान्त्रिक वाङ्मय में शाक्तदृष्टि | म०म०गोपीनाथ कविराज |
| ९४- | तान्त्रिक साधना और सिद्धान्त | म०म०गोपीनाथ कविराज |
| ९५- | नरेश्वर परीक्ष | श्रीरामकण्ठाचार्यः/ प्रो०रामजीमालवीय |
| ९६- | नेत्रतन्त्रम् | क्षेमराजः |
| ९७- | परात्रिंशिका | अभिनवगुप्तः |
| ९८- | पातञ्जलयोगदर्शनम् | पतञ्जलिः |

| | |
|---|---|
| ९९- पाशुपत सूत्रम् | कौण्डिलयः |
| १००- प्रपञ्चसारतन्त्रम् | पद्मपादाचार्यः |
| १०१- महानिर्वाणतन्त्रम् | कुलावधूतहरिहरानन्द भारतीय विरचितयाटीका |
| १०२- मालिनीविजयोत्तरतन्त्रम् | अभिनवगुप्तः |
| १०३- मृगेन्द्रतन्त्रम् | मेहरचन्द लक्षमनदास नई दिल्ली |
| १०४- योगदर्शनम् | पतञ्जलिः |
| १०५- योगसारसंग्रहः | विज्ञानभिक्षुः |
| १०६- योगदर्शनं व्यासभाष्यसहितम् | पतञ्जलिः |
| १०७- स्वच्छन्दतन्त्रम् | क्षेमराजः |
| १०८- योगिनीहृदयम् | अमृतानन्दः |
| १०९- रुद्रयामलतन्त्रम् | रामकुमार रायः |
| ११०- लक्ष्मी तन्त्रम् | चौखम्बा संस्कृत सीरीज वाराणसी |
| १११- वरिवस्यारदृस्यम् | भास्कररायः |
| ११२- शिवदृष्टिः | उत्पलदेवः |
| ११३- शिवसंहिता | बरेली |
| ११४- शिवसूत्रम् (वृत्ति वर्त्तिका विमर्शिनी) | वसुगुप्तः |
| ११५- सिद्ध सिद्धान्त पद्धतिः | गोरक्षनाथः |

| | |
|---|---|
| ११६- सौभाग्यभास्करः | भास्करराय |
| ११७- हठयोग प्रदीपिका | स्वात्मरामो योगी |
| ११८- संस्कृत हिन्दी कोशञ्ज | शिवराम वामन आप्टे। |